कृत्वोर्थग्रहणंसाहचर्यं नव्यस्यापकंसर्वत्रेत्यर्थज्ञापनार्थम्। तेनदीधीवे
वीटामित्यत्रागमस्येटोग्रहणंनतुधातोरिति ज्ञापनफलन्दर्शितं तथा
पि प्रकृतेकिमिति पृच्छति । कृत्वोर्थेकिमिति । नन्वस्त्वेवं कृत्वोर्थ
इत्यनेनैवकृत्वोर्थेवर्त्तमानस्ये दुदुपधस्यपदस्ययो विसर्गस्तस्यषत्वंवे
ति सूत्रार्थेदशकृत्वः करोतीत्यादौनाति व्याप्तिर्नवाचतुष्करोतीत्यादा
वव्याप्ति रितिद्विस्त्रिश्चतुरितिन कर्त्तव्यमितिचेन्न । कृत्वोर्थेइत्य
स्येदुदुपधस्येति सूत्रंप्रत्ययसिद्धेस्तुभ्यशब्देनित्यषत्वापत्तेः।ननुप्रकरणे
प्रकरणमसिद्धं नतुयोगेयोगः । तदुक्तमुपसर्गादसमासेपिणो पदेश
स्येत्येत्राष्टमेभाष्ये । समासेपूर्वपदादिनियमान्नप्राप्नोति । असिद्धमुप
सर्गात्सत्वं तस्यासिद्धत्वान्नियमोनभविष्यति एवंतर्हिसिद्धेसति यद
समास ग्रहणंकरोति तज्ज्ञापयत्याचार्यः नयोगोयोगेसिद्धः किंत
र्हिप्रकरणे प्रकरणमसिद्धमिति।एवंचतद्ग्रहणं व्यर्थमेवेतिचेन्न । र
षाभ्यामित्यत्रसमानपदं समानमेवयन्नित्यंपदंतदाश्रीयते इति समासे
नास्य प्रवृत्तिरिति पूर्वपदात्संज्ञायामग इत्यस्यनिव्यर्थत्वेन समासग्रह
णस्यज्ञापकत्वानुपपत्तिरितिकैयटेनतत्पक्षस्यदूषितत्वात्पूर्वत्रासिद्ध
मित्यत्रपूर्वपदेन प्रकरणे ग्रहणेव्यवहित प्रकरणएवत्रिपाद्या असिद्ध
त्वंस्यादितिदोषादस्याधिकारत्वे प्रतियोगमुपस्थित्याप्रतिसूत्रमसिद्ध
त्वस्यदुर्वारत्वाच्च । ननुसुच इत्येवास्तुसूत्रम् । पदस्येत्यधिकारात् सुज
न्तपदावयवविसर्गस्येत्यर्थसंभवेनद्विष्करोतीत्यादेर्निष्प्रत्यूहत्वात् । न
चपरमद्विष्करोतीत्यादौषत्वानापत्तिः । प्रत्ययग्रहणपरिभाषयाज्ञाप
यिष्यमाणया ऽवयवस्यसुजन्तत्वेपि उत्तरपदत्वेचापदादिविधाविति
निषेधेनापदत्वादितिवाच्यम् । अनुत्तरपदस्थस्येतिनिषेधेनक्वचिदुपा
त्तविशेष्यासत्त्वेपि शब्दरूपविशेष्यमादाय तदन्तविधिरितिज्ञापनेनश
ब्दरूपविशेष्यमादायप्रत्यय. ग्रहणपरिभाषयालब्धतदन्तार्थकस्यपदवि
शेषणतयासुजन्तत्तस्येत्यर्थेनादोषात्।एवमेववनोरचेत्यादेरर्थ इतिदि
क्।तस्मात्सुच इत्येवसूत्रयितुमुचितमितिप्राहुः । चतुष्कपालइति।चतुर्षु
कपालेषुसंस्कृतइत्यर्थे संस्कृतंभक्षाइत्यनेन जातस्याणोद्विगोर्लुगनपत्य इ

तिलुक्। चतुश्शब्दस्याव्युत्पन्नत्वाःदिदुदुपधस्येतिनित्यं षः। अतएवच तुष्याङ्मोढञित्यादिनिर्देशसंगतिः।नचह्यवरट्सूत्रभाष्येइदुदुपधस्यस स्ययोविसर्गइतिसूत्रार्थकथनेनकथमत्रप्रवृत्तिः।विसर्गस्यपाठाभावेनोप धात्वासंभवात्तस्यानिनिमित्तमुपधात्वंग्राह्यमितिभाष्यकर्तुराशयात्। अतएवाष्टमेसमस्सुटीति सूत्रेसंपुंकानामितिवार्त्तिकेन रुविधानमेवा स्त्वित्याशंक्यनैवं शक्यंपुंस्कामेत्यत्रेदुदुपधस्येति षत्वंप्राप्नोतीत्युक्तं सं गच्छते। नन्विहसामर्थ्यपदस्यैकार्थीभाव प्रसरत्वात्तदेवयुक्तं तथाच सर्पिष्करोतीत्यादौप्रवृत्तेरभावात्सूत्राप्रवृत्ताविदुदुपधस्येतिनित्यषत्व प्राप्तिरतआह। इहव्यपेक्षेति। इहैवेत्यर्थः। अतएवोत्तरसूत्रेभाष्ये पूर्वयोगेव्यपेक्षासामर्थ्यम्नचात्रव्यपेक्षासामर्थ्य मित्युक्तम्।अयंभावः। इहैकार्थीभावसामर्थ्यग्रहणेपरमसर्पिः कुण्डिकेत्यादावेकार्थीभाव रू पसमासेप्येतत्प्रवृत्त्या विकल्पापत्तिः। उत्तरसूत्रान्तः कोत्यानुत्तरपद स्येत्यनयानित्यं समासइति कोटेर्व्युदासादिति। सामर्थ्यकिमिति। नन्वेतदभावे प्रतियोगित्वेनैकार्थीभाव पर्यवसानेतत्रचोक्तदोष स द्भावात्प्रश्नानुपपत्तिः। नचपरस्पराकांक्षारूपा व्यपेक्षाकिमर्थमा श्री यतइत्याशयइति वाच्यम्। एतदर्थाभावे प्रतियोगित्वेनैकार्थीभा वार्थं पर्यवसानेनिरुक्तदोषा तृतीयकोटेश्चाभावात्। नचोत्तरसूत्रेए कार्थी भाववृत्तिरूपसमास ग्रहणेनैतत्सूत्र विषयतास्वातिरिक्त विष यिणीक्षाप्यतइति व्यपेक्षालक्षणं सामर्थ्यलब्धेकिमर्थंतदित्याशय इति वाच्यम्। एतत्सूत्रेणसिद्धिमाशंक्योत्तर सूत्रवैयर्थ्यंतत्सामर्थ्यादनयोर्भा व्यकैयटयोर्निर्दलत्वा पत्तेरिदञ्चसमनन्तरमेव दर्शयिष्यतेइति चेत्स त्यम्। नायंकिंशब्दोत्र पृच्छायांकृतर्हिजिज्ञासायाम् व्यपेक्षापदेनकी दृशोर्थो विवक्षितइति तात्पर्यम्। प्रत्युदाहरणमुखेन ज्ञापयति। ति ष्ठतुसर्पिरिति। तत्रपरस्पराकांक्षारूपोर्थ इति नात्रप्रवृत्तिरितिभावः विभक्तेः क्रियामन्तरानुत्पदादेकक्रियान्वयेन्यत्रापेक्षाभावादित्यर्थः। वैपरीत्येनान्वयेत्विष्टमेवेति बोध्यमितिदिक्। अनुत्तरपदस्यस्येति किमिति। इति शब्दोप्यर्थसमाप्त्यर्थेवा इति शब्दापाठेतु अवयव

द्वारा समुदायस्य संग्रहः । उभयत्रापि सूत्रे किमर्थमिति प्रश्नः । ज्ञा
प्येतु वशिष्ट सूत्रवैयर्थ्यादेराशङ्कनात् । तद्यथा । किमर्थं तर्हीदमु
च्यते । प्रतिषेधार्थस्तु यत्नो यमनुत्तरपदस्येतीलि इदं व्याचष्टे कैयटः ।
इसुसोस्सामर्थ्य इत्यत्र व्यपेक्षालक्षण सामर्थ्यं ग्रहणात् । समासेइदु
दुपधस्येति नित्यं षत्वं सिद्धं तत्किमर्थमिदं सूत्रमिति प्रश्नाशयः । उत्त
रपदस्यस्य समासेषत्वनिवृत्त्यर्थं सूत्रमित्यर्थ इति तदेव समाधत्ते । पर
मसर्पिरिति । नित्यग्रहणन्तु नकर्तव्यं समासेइदुदुपधस्येतिनित्यं षत्व
सिद्धेरिति कैयटः। नित्य समास इत्यनेन निषेधापत्ते वैयर्थ्य माशंक्याह।
कस्कादिष्विति । ननु तत्रपाठसामर्थ्यादुत्तरपदस्यस्यापि षत्वमस्तुक
थमन्यार्थतेतिचेन्न । अनुत्तरपदस्यस्येतिग्रहणस्य तज्ज्ञापकभाष्यस्य
चासंगत्यापत्तेः । असमासं व्यपेक्षा विरहेपीति । तिष्ठतु सर्पिःकुंडिका
मानयेत्यादौ नित्यसमासे इसुसोरित्यनयोरप्रवृत्तेः षत्वं नस्यादिति
भावः । व्यपेक्षायामिति । सुंदरंसर्पिःकुण्डिकाया इत्यादौ इसुसोरि
तिविकल्पापत्तिरितिभावः । * इति विसर्गसन्धिः । * ननु यत्वस्यासि
द्धत्वादुत्वेकृतेपि तस्य स्थानिवद्भावेन रुत्वाद्युत्वं स्यादित्यत आह । य
त्वस्यापवाद इति । ननु पूर्वत्रासिद्धत्वेनोत्वेकर्तव्ये रुत्वमसिद्धमत आ
ह । नभवतीति । आश्रयासिद्धेरित्याह । सामर्थ्यादिति । ननु रोः सु
पीत्यस्यानन्तरम् अतउरतीत्येवास्तु सूत्रं, नैवम् । उत्वस्यासिद्धत्वेनाद्गु
ण प्रवृत्त्यनापत्तेरित्याहुः । अशिकिमिति । अशतिरिक्तेयादेशेपि भो
भगो खरवसानयोरुभयो खिपादीस्यत्वेपि पूर्वत्रप्रतिपरस्यासिद्धत्वा
द्विसर्गविधिं प्रतियत्वविधेरसिद्धत्वा द्विसर्गस्यैवलाजात्क्कुत्राप्यनिष्टं
मापद्येतेतिनार्थोऽश्ग्रहणेनेति पर्यनुयोक्तुराशयः॥ सत्यमिति तदा
शयमनूद्यसमाधत्ते । यद्यपीत्यादिना । स्थानिवद्भावेनेति । नचाति
देशं प्रतिविसर्गविधेर सिद्धत्व शंक्यम् । ननु ने इत्यत्र नेतियोगविभा
गेन प्रत्ययः परश्चेतिनिर्देशे क्वचित्त्रिपादी पूर्वंप्रतिनासिद्धेति ज्ञाप
नात् । ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानीत्यलिवधित्वे
नस्थानिवद्भावोनस्यादित्यत आह । नह्ययमलिवधिरिति । व्याख्या

नाऽस्समुदायस्योकार विशिष्टरेफस्य स्वीकारादितिभावः । यथाऽग्र
हवृश्चपति स्थितेग्रहोलिटिदीर्घ इत्यनेनाकारस्य दीर्घतस्यस्थानि
वद्भावेनेटमाश्रित्येट ईटीतिसिज्लोपः क्रियते । तदुक्तं भाष्येविधि
प्रोश्लेषोऽनलमाश्रयते इटत्नासेति तस्मादत्रस्थानिवद्भावेन कृत्वा
द्यत्वं स्यादित्यश् ग्रहणं स्थितम् । ननुग्रहोलिटीत्यत्रदीर्घस्य स्थानिव
त्त्वेनेट एवनिर्देशोनत्वच इटइति श्रुत्याघष्ठेत्यस्याप्रवृत्तेः, अनियमेनि
यमकारिणीपरिभाषेति न्यायादितिकैयटः । इटइटीत्यत्रापीट्त्वेनै
वनिवेशइतिबाढमनल।श्रयणंतत्रज्ञाप्यकर्त्तुः । इहतुविसर्गेरेफस्यैव
स्थानिवत्त्वेनवैषम्यादजवद्वचनं दृष्टान्ततामभिप्रैति । अनल्विधावि
त्यस्यचस्थान्यलवृत्तिधर्माश्रयेस्थान्यलसम्बन्धालवृत्तिधर्माश्रयेचस्थानि,
वद्भावोन भवतीति भाष्यसम्मतार्थः । प्रकृतेचस्थान्यल्रेफवृत्तिरुत्वं
स्थानिवद्भावेनदुर्लभमल् विधित्वात् । तस्माद्यत्रविसर्गस्स्थानीसमु
दितोरुस्सम्भवति तादृशमुदाहार्यम् यथायशः सुपयसुइत्यादौ ।
इहरोः सुपीत्यनेनरोस्समुदायस्य विसर्गविधानेन रुवृत्तिरुत्वस्यालवि
धित्वाभावेनस्थानिवत्त्वाला भेनयत्वं स्यादित्यश् ग्रहणमिति चे
दसत्यम् । रोस्सुपीत्यत्रापिरो रीत्यतोरेफस्यानुवर्त्तना द्रेफस्यैववि
सर्गं विधानेनाल्विधित्वादुक्तो दाहरणे समत्वात् । नत्तूत्तरार्थम् ।
तदुक्तं भोभगोइत्यत्राष्टमे भाष्येउत्तरार्थन्तर्हि अश्ग्रहणं कर्त्तव्यम् ।
हलिसर्वेषांहल्यशीति यथास्यात् इहमाभूत् वृक्षवयतेर प्रत्ययः वृ
क्षव्करोतितिचेन्न । नपदान्ताहलोऽणः सन्तीतिलण् सूत्रभाष्यवास
हविरोधात् । किंचवृक्षवद्वसतीत्यत्रापिहलि सर्वेषामिति लोपेप्राप्ते
ईदृश प्रयोगस्यानभिधानस्यैव शरणीकरणीयत्वेन सर्वत्रेदृशानामन
भिधानमेव युज्यतेवक्तुम् ॥ किंचहलिसर्वेषामित्यत्र वकारानानुवृ
त्त्यापिगतार्थयितुं शक्यते । व्याख्यातंचभाष्यं कैयटेन । अत्राश्ग्रहणा
नुरोधेन चैतद्भाष्यकारेणो दाहृतंल ण्सूत्रेतुनपदान्ताहलोऽणस्सन्ती
त्युक्तमितिअतएवभगवद्भिरुदासीनैरुत्तरार्थंतर्हीत्युक्तम् । तस्माद
श्ग्रहणमदृष्टार्थंमूलंतुयथाश्रुतमेव।पदेकिमिति।गौरवात्प्रश्नः।तन्त्रयुत

मितितन्नन्तत्म् । एकारस्यायादेशः । उत्तरार्थमिति । तदुक्तमत्र
भाष्येपदइतिशक्यंनवक्तुंकस्मान्नभवतितन्नयुनम् । लक्षणप्रतिपदो
क्तयोरिति । उत्तरार्थंलहिंङमोह्रस्वादचिङमुण्नित्यमित्यादेर्माभूद्
विङ्नेति । छुवश्चमहाभाष्यात्तुनेरितिसूत्रेमहाभाष्यात्तिग्रहणेनोक्तपरिभा
षानित्या । यदित्विति वदतोमूलकृतोप्ययमेवस्वरसस्तेनपदग्रहणमि
हार्थंनपीतिकश्चित् । अजादेःपदस्यङमुडवेतिभाष्याक्षरार्थः।ह्रस्वात्प
रोयोङमन्तदन्तंयत्पदमित्यादिकंतत्सूत्रार्थेनुपरमदण्डिनावित्यादाव
न्तवर्तिविभक्त्यापदत्वान्नुट्स्यात्। ननूत्तरपदत्वेचेतिनिषेधइतिचेन्न
अपदादावितिपर्युदासेनपदान्तत्वनिमित्तकेविधौ प्रत्ययलक्षणंनेति
नलुमतेत्यत्रभाष्यसंमतार्थेनेहाप्रवृत्तेः।किंचयत्रोत्तरपदस्यकार्यंस्वं तत्रै
वतत्प्रवृत्तिः । अतएवनाथकुम्भवापेनेत्यादौ पदव्यवायेपीतिप्रतिषे
धसिद्धिरित्यधिकंनागेशीयेद्रष्टव्यमनेघंदंहलन्तनपुंसके । तस्मान्म
तडूकमुत्थोत्तरार्थंपदग्रहणमितिस्थितम् । अणःकिमिति । दीर्घश्रु
त्याचश्चेतिपरिभाषयाप्येवदीर्घोभविष्यतीतिप्रष्टुर्भावः । ढ्रलोपेढ
इति । ऊदित्वेनवेट्कत्वाद्यस्यविभाषेतिनेट्उत्वधत्वष्टुत्वढलोपाः ।
ऋकारोनाणन्तर्गतइतिदीर्घोनेतिभावः । अण्ग्रहणसामर्थ्यादेवा
त्राणपूर्वग्रणान्यथोक्तरीत्यैवसिद्धेः । अत्रापूर्वेणैवव्याख्यानादितितुन
युक्तम् । व्याख्यानस्यागतिकगतित्वादित्याहुः । ननुपूर्वस्येतिनकार्यं
सप्तमीश्रुत्यैवतस्मिन्नितिपरिभाषो पस्थानादतआह । पूर्वग्रहणमि
ति । अस्यसूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्य योरेवढरेफयोः
परतोदीर्घविधानंस्यादितिभावः । एवंचेदित्याह अजर्घाइति । गृ
धेर्यङ्लुकिठत्वेऽभ्यासस्यरुगागमेलङः सिपिशब्लुकिलघूपधगुणेर
परत्वेइतश्चेतीकारलोपेहल्ङ्यादिलोपेभस्भावेजश्त्वेदश्चेतिरुत्वेअज
र्घर्इतिस्थितेरोरीतिरेफलोपेऽनेनदीर्घइतिदिक्।मनस्रथइत्यादि।
हशिचेतिदेवोहसतीत्यादौसावकाशम् । रोरीतिपुनारमतइत्यादौल
ब्धावसरम् । उत्वमेवेति। सिद्धासिद्धयोरतुल्यबलत्वेनविप्रतिषेधशूत्रा
प्रवृत्तौनिष्प्रतिपक्षत्वादुत्वमेवभवतीत्यर्थः । तदुक्तम् । पूर्वत्रासिद्धे

नास्तिविप्रतिषेधोऽभावादुत्तरस्येति । अको:किमिति । अकचसहित योऽशब्दान्तरत्वादेवतत्रनाऽतिप्रसंगःइतिप्रश्नः । एषकइति । अको रितिनिषेधएवतन्मध्यपतितस्तद्ग्रहणेनगृह्यते इतिपरिभाषाज्ञापय तीतिसमाधानम् । अनञ्समासइतिकिमिति । नञोऽभावार्थकत्वे नाभावेप्रतियोगिनोविशेषणत्वात्पूर्वपदार्थप्रधानेनो पसर्जनत्वात्त्यदा दीनासइत्यस्याप्रवृत्तौहल्ङ्यादिलोपएवभविष्यतीतिशंकितुराशयः। तत्रपूर्वपदार्थप्रधानत्वेऽतौस्त्वइत्यत्र द्विवचनादि अत्वंभवतीत्यादौ पुरुषव्यवस्थादिचनसिध्येदित्याशयेनसमाधत्ते। असइति।एतद्ग्रहण मुत्तरपदार्थप्रधानतांनञ्समासेज्ञापयतीतिभावः। अतएवोत्तरपदार्थ प्रधानस्तत्पुरुषइतिप्रवादोपिसम्पद्यतइतिदिक् ॥ इतिपञ्चसन्धिः ॥ अथपाचकऔपगवइत्यादौप्रत्ययान्तत्वेन प्रातिपदिकसंज्ञापर्युदा सात्कृत्तद्धितयोर्ग्रहणमावश्यकं समासेस्वरसन्ध्युक्तरीत्यासमुदायस्या र्थवत्त्वादर्थवत्सूत्रे णैवसिद्धे व्यर्थंतद्ग्रहणमतआह । नियमार्थमिति। ननुराजपुरुषइत्यादावपिप्रत्ययान्तत्वेन निषेधाद्विध्यर्थमेवास्तुकथ मेतदितिचेन्न।प्रत्ययग्रहणेयस्मादितिपरिभाषयास्त्रीप्रत्ययेज्ञापयिष्य माणयावारणात् । तद्यथा । कृतेसमासेसुपोधातुप्रातिपदिकयोरिति सुपोलुगर्थमपेक्षिताप्राति पदिकसंज्ञातत्रचपुरुषशब्दस्यप्रत्ययान्तत्वे पिराजपुरुषइतिसमुदायस्योक्तपरिभाषयाप्रत्ययान्तत्वाभावात् । ननु राजकुमारीत्यादौ स्त्रीप्रत्ययेचानुपसर्जनेनेतिवाचनिक्याव्यङः संप्र सारणमितिसूत्रेभाष्योक्तपरिभाषाया अप्राप्तेर्दोषइतिचेन्न,अन्तरङ्गा नपिविधीन्बहिरङ्गोलुग्बाधत इतिहलन्तपुल्लिङ्गेज्ञापयिष्यमाणयाप रिभाषयान्तरङ्गहल्ङ्यादिलोपस्याप्रवृत्तेःश्रूयमाणएवसुपिसमासेन तत्रचाप्रत्ययान्तत्वेनप्रवृत्तायाः प्रातिपदि कसंज्ञायाएकदेशविकृत मनन्यवदिति परिभाषयानिर्जरशब्देवक्तव्याविभक्तिलुक्पिसुलभ त्वात् । ननुचार्थवत्त्वंशक्तिलक्षणाव्यञ्जनान्य तमसम्बन्धेनार्थबोधक त्वमितिस्वीकाराच्चशशशृङ्गमित्यादौ तदभावात्समासग्रहणंविध्यर्थ मिति चेन्मैवम् तत्रापिबौद्धशक्तिस्वीकारस्यान्यत्रप्रपञ्चितत्वात् ।

ननुवृत्तिमत्प्रातिपदिकमित्येवास्तुसूत्रमितिचेन्न भावाशब्दानामप्यव
यवशक्तिस्वीकारेण तत्रापिसंज्ञयासाधुतापत्तेस्तिङादावपिदोषापत्ते
श्च । नचकृदादिवृत्त्यभिप्रायेणलाघवंसूत्रमास्तामितिचेन्न अव्युत्पन्न
डित्यादावव्याप्तेः । सनाद्यन्तलुङ्गोपावाश्चेतिदिक् । ननुनाप्यकृदभि
हितप्रत्याहाराद्यन्तिप्रातिपदिकमिति न्यासस्वीकारेणसुप्तिङन्तभिन्न
प्रातिपदिकसंज्ञास्यादित्यर्थात्समासस्यापिस्यान्मास्तान्च नियमसूत्र
मितिचेन्न । प्रत्येकंवनमित्यादौयद्दशदाडिमानिषडपूपाइति समु
दायेषुचसंज्ञानिरासाय बहुपठवद्दत्याद्यर्थन्चार्थवत्सूत्रस्यावश्यकर
णीयत्वे नियमसूत्रस्यापि करणीयत्वात् । एतेनाहन्निरयत्रहन्तेर्लङिन
लोपवारणायाधातुग्रहणस्यावश्यकत्वे नियमसूत्रस्य लिट्धुगित्याद्यर्थं
कृद्ग्रहणस्यावश्यकत्वात् । काण्डेकुण्डेइत्यादावतिव्याप्तेश्चोक्तन्यासो
नकार्यइति मन्दोक्तमपास्तम् । प्रत्ययलक्षणेनलुप्ततिङन्तसुबन्तत्वा
श्रयणेनैवेष्टसिद्धेः। सप्तम्यधिकरणेचेत्यादिनिर्देशैर्विभक्त्यादेशस्यान्त
वद्भावानभ्युपगमात्काण्डेइत्यादौदोषाभाव इतियथान्यासएवात्रापि
वक्तुंशक्यत्वादितिदिक् । नियमस्वरूपमाह यत्रेति । संघातेऽर्थवति
पदसमुदायेइत्यर्थः । समासस्यसजातीयएवनियमइत्याह पूर्वोभागः
पदमिति । चतुर्विधेपिसमासेपूर्वभागस्यपदत्वाव्यभिचारादितिभा
वः । ननुजन्मवानित्यादौस्वादिष्वसर्वनामेत्यनेन पूर्वभागस्यपदत्वा
त्संज्ञानापत्तिः । नचतद्धितान्तत्वात्सिद्धिः। तस्यौपगवमित्यादौ
यचिभमिति पूर्वभागस्यभत्वेननियमाप्राप्त्याचरितार्थत्वादितिचेन्न ।
पूर्वनियमेउत्तरस्तुप्रत्ययोनेशत्यंपूरणात् । एवमपिराजेयानित्यत्रपूर्व
भागस्यपदत्वेऽप्युत्तरस्यप्रत्ययत्वान्नियमाप्राप्तेस्समुदायस्य प्रातिपदि
कत्वंस्यादितिचेन्नैवम् पूर्वभागप्रकृतिकप्रत्ययोनेतिव्याख्ययात्रा
तथात्वात् । नचोक्तरीत्यापिपूर्वोभागः पदमितिनियमांशंविनापि
समीहितसिद्धेस्तदंशोव्यर्थ इतिवाच्यम् । बहुपटवइत्याद्यर्थमावश्य
कत्वात्तथाहि बहुच्विशिष्टस्य प्रातिपदिकत्वे नजसोलुकिसतिचितः
सप्रकृतेर्बह्वकजर्थमित्यनेनप्रत्ययेसतिप्रकृतिप्रत्ययसमुदायस्यान्तउदा

सं॰वाच्य इत्यर्थः केनपटुपदात्परोकारस्योदात्तत्वसिद्धिः अन्यथाजस
एवोदात्तत्वेऽनिष्टापत्तेः।नचतद्धितग्रहणस्य तद्धितविशिष्टपरत्वा
द्दोषइतिशंक्यम् । पचतकीत्यादावतिव्याप्तेः । ननुवृषखवसुरीत्यत्र
वृषखवस्वश्वयोरिति सूत्रेणपूर्वंभागस्यभत्वान्नियमा प्राप्त्यासंज्ञानाप्राप्ति
रितिचेन्न। तस्यछान्दसत्वात्वृषण्वसुइत्यवस्थायामेव प्रातिपदि
कसंज्ञाप्राप्तेस्तदानीं चवसुशब्दपरत्वाभावेनैवभसंज्ञायाःप्रवृत्तेश्चेतिदि
क्। नियमफलमाह । वाक्यस्यनेति । गामानयशुक्लांदण्डेनेत्यादौस
तिप्रातिपदिकत्वेसुपो ऽश्रवणापत्तिरितिभावः। ननुकृद्ग्रहणेगतिकार
कपूर्वस्यापि ग्रहणमिति परिभाषयासमासे कथयिष्यमाणयामूलकेना
पदंशंजुर्त्तं इत्यादिवाक्यस्यापदेव संज्ञा।नचभुजिक्रियायां मूलकेने
त्यस्य करणत्वेनान्वयादुपदशंकृदन्तं प्रतिकारकत्वमेवनास्तीतिभ्रमि
तव्यम् उपदंशमित्यत्रकर्मत्वेनाप्यन्वयस्यवक्तुंशक्यत्वात् तत्रचप्रधान
भुजि क्रियानिरूपितकरणत्वसंज्ञाप्रयुक्ततृतीयैवपष्ठ्यस्तु गोधावतीत्या
दाविवेतिस्पष्टमन्यत्रेतिचेन्नसमासकृतनियमेनपरत्वात्कृदन्तप्रयुक्तका
र्यबाधनस्याङ्गीकारादितिसंक्षेपः । अधिकारसूत्रेङ्याप्पोर्ग्रहणमाशित्व
त्याक्षिपति । लिङ्गविशिष्टस्यापीति । लिङ्गबोधक प्रत्ययविशिष्टस्या
पीतितदर्थः।इयंचपरिभाषायुवाखलतीत्यादिसूत्रेयुव ग्रहणादिभिर्ज्ञा
पितेति स्पष्टमाकरे । तद्धितोत्पत्तिरिति । अन्यथोभयत्रापिप्रत्ययत्वे
नोत्पत्तावनियमः स्यादिभावः । ङ्यावन्ताद्धितोत्पत्तौतु आर्यका
आर्यिकेतिरूपद्वयसिद्धिस्तथाहि प्रथममार्यपदादापितत: स्वार्थिके
कनिकेऽणइति ह्रस्वत्वेउदीचामातस्थानेयक पूर्वायाइत्याकारस्यानि
काकारस्येत्वविकल्पात् । अन्यथातु प्रत्ययस्थादित्यनेनोत्सर्गविधिना
नित्यमेवेत्वे आर्यिकेत्येकमेवरूपंसिध्येत्ङ्याब्ग्रहणंस्त्रीप्रत्ययमात्रो
पलक्षणम् तेनयुवतितरेत्यादौवयोवाचकेवै कल्पिकजातित्वस्य स्त्री
काराज्जातेश्चेति युवत्वनिषेधसिद्धिः।किंचतद्धितग्रहणंसमासान्तप्रत्य
याद्यतिरिक्तपरम् तेनयूनीतिरितिबहुगोमतिकेतिप्रयोगोनेतिबोध्य
म्।वस्तुगत्याङ्याब्ग्रहणंनकर्तव्यम्तथाहिघकालतनेषुकालनाम्नइत्या

दिप्रापनात्सुबन्तात्तद्धितोत्पत्तिरितिपरमार्थः तत्रस्वार्थद्रव्यलिंगसंख्या कारकेति पञ्चविधप्रातिपदिकार्थं प्रयुक्तकार्याणांक्रमनियमः प्रथमंश ब्दप्रवृत्तिनिमित्तत्वेनजातिबोधः । ततोधर्मित्वेन प्रधानस्याल्लिङ्गा दिभिरपेक्षितत्वाद्व्यक्तिबोधः । ततस्वमात्रापेक्षत्वाल्लिङ्गबोधः त तोविजातीयक्रियापेक्षयाकारकापेक्षया सजातीयपदार्थपंक्तसंख्यायाः प्रथमसुपस्थितत्वात्संख्याबोधः । ततः कारकरूपविभक्त्यर्थापेक्षया कारकबोधः । तथाचलिङ्गकार्यान्तमेवतद्धितोत्पत्तेः पूर्वोक्तप्रयोगाणा मनुपपत्तिरिति वदन्ति । ननुरामाइत्यादौ दीर्घोनस्यात्सवर्णदीर्घंबा धकत्वादतो गुणस्येत्याशंक्यापवादविषयबाध्य विशेषचिन्तापन्नमूल न्यायेनसमाधत्ते पुरस्तादिति । अयञ्चन्यायोनादिचीती ङग्रहणेन ज्ञाप्यते तद्धिरामारामानित्यादौ निषेधाभावार्थं क्रियतेपररूपेणैव पूर्वसवर्णदीर्घं बाधनेष्टितद्ग्रहणंव्यर्थंमिति । एवंहिपाठक्रमः अतो गुणे, अकः सवर्णेदीर्घः, प्रथमयोः पूर्वइति, अत्रवक्तव्यमुक्तंस्वरस न्धौ,वक्ष्यतेच । हेरामेत्यादौ विप्रतिपत्तिन्निरस्यति । संबुध्याक्षिप्तस्ये ति । प्रत्ययविधावङ्गस्यापेक्षितत्वेनाङ्गाक्षेपस्यो चितत्वादितिभाव इ त्येके । संबुधेः प्रत्ययत्वेनयस्मात्सविहितस्ततादीत्यंश रूपस्याङ्गस्या क्षेपोनत्वङ्गस्येतिसूत्रस्येतिस्पष्टंभाष्यइत्यन्ये । एवञ्चमौलिकार्थस्यहे रामइत्यादिविषयोनत्वन्यइत्याहहेकतरदिति । इहप्रकृत्यकारस्यटि लोपेनापहाराद्ह्रस्वान्ताङ्गात्परहलोऽभावादित्याशयः । ननुयेनयदा क्षिप्यतेतत्तस्यैवविशेषण मितिन्यायस्यजात्याक्षिप्तव्यक्तौ व्यक्तत्वात्प्र कृतेपि संबुद्ध्याक्षिप्तस्याङ्गस्यसम्बुद्धौ एवान्वयस्यो चितत्वेनाङ्गात्पर स्यास्संबुद्धेरवयवस्यहलोलोपइति सूत्रार्थंउचितस्ततश्चहेकतरदित्या दिसिद्धेर्मूलोक्तार्थोनयुक्तो उक्तन्यायविरोधादितिचेन्नैवमित्याहकुले ति । तथासती । तथासतीदन्नसिध्यतीत्यभिप्रायः । अत्रस्वमोर्नपुंस कइतिलोपात्परत्वादतोमि कृतेऽमि पूर्वरूपत्वेचहलन्ताङ्गात्परसं बुद्धेरभावान्सलोपोनस्यात्।नम्बेकादेशस्यपूर्वान्तवद्भावेनह्रस्वान्ताङ्गा त्परत्वमितिचेत्हन्तभोः परादिवद्भावंविनाऽमिसंबुद्धित्वस्यैवाभावा

त्। नचद्वयोराश्रयणमुभयतआश्रयणेनान्तादिवदितिनिषेधात्सत्यप्येवं
ह्रस्वसंवुद्ध्योःपौर्वापर्यव्यवहारासंभवापत्तेश्च। एवञ्चलक्ष्यानुरोधाद
न्यायसिद्धस्याप्यन्यत्रान्वयइतिस्वीकारेणाकुत्रचिदन्यायास्वीकार इतिभा
वः। नन्वेवमपिकथमत्रमकारलोपस्संवुद्धित्वस्यसकारमात्रनिष्ठत्वेन
स्थानिभूतालधर्मत्वादनल्विधावितिनिषेधेनस्थानिवद्भावाभावेनामः
संवुद्धित्वविरहात्मस्यसंवुद्ध्यवयवत्वाभावादितिचेन्न। सुसञ्ज्ञायामुका
रविशिष्टसत्त्वेनसुवपस्याप्युज्जायमानैकवचन संज्ञायाविशिष्टसत्त्वेसं
वुद्धिसञ्ज्ञायामित्सञ्ज्ञकोकार विशिष्टस्यैवोद्देश्यत्वेनतस्यानल्विधित्वा
त्स्थानिवद्भावेनसंवुद्धित्वस्यसुलभत्वादितिनकश्चित्क्षुद्रोपद्रवः। एङ्ग्रहण
किमिति। हरे विष्णो इत्यादावङ्गाधिकारस्यात्परनिमित्तापेक्षाच्चगुणा
त्पूर्वंह्रस्वान्तत्वादेवसिद्धिः। सेप्रभृतीनांत्वनभिधानमेवसतिवाभिधा
ने एङ्ग्रहणेनैवसिद्धेःप्रत्याहारोव्यर्थइतिप्रष्टुराशयः। समाधत्ते हरेइ
ति। तत्सामर्थ्यादेवात्रसन्निपातपरिभाषानिवृत्तिः गुणात्संवुद्धेरितिव
क्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्चेतिदिक्। संनिपातपरिभाषयाप्रवृत्ते
रेवहेलक्ष्मिइत्यादौसंवुद्धिलोपइत्याहुः। सन्निपातेति। सन्निपातलक्ष
णोविधिरनिमित्तन्तद्विघातस्येतिपरिभाषाशरीरम्। सन्निपातःसंश्लेष
सलक्षणोनिमित्तंयस्यसतंसन्निपातंयोविहन्तिनिवर्तयतिसतद्विघातस्त
स्यनिमित्तं कारणान्नभवतीतितदर्थः एवञ्चेयम्परिभाषोपजीव्योपजीव
कभावविरोधमूलिका। उपजीवकविधिरुपजीव्यविधेर्विघातेकारणन्न
भवतीतिवार्त्तिकार्थः। ननुयञादित्वसापेक्षदीर्घस्यवहिरङ्गतयासिद्ध
त्वान्नेहसंनिपातविघातइतिचेन्न। आरोपितासिद्धत्वेपिवास्तविक
तद्विघातस्यजायमानत्वेनतत्प्रवृत्तेरितिदिक्। कष्टायेति। नचात्राकृ
त्सार्वधातुकयोरितिदीर्घोऽतःकथमस्यानित्यताज्ञापकत्वम्। तस्यापि
संनिपातपरिभाषयैवाप्राप्तेरित्याशयात्। विरोधाभावात्फलविशेषा
भावाच्चपरत्वेप्यकृदितिसूत्रमत्रनोपन्यस्तम्। नन्वकृत्सार्वेतिपर्युदासे
नतिङन्तएवास्यप्रवृत्तिरित्यपियुक्तम्। अंगवृत्तपरिभाषाचाज्ञापयितुं
ज्यादादीयसइतिसूत्रेह्रस्वमकारविधायज्यायानित्यत्रा कृत्सार्वेतिदी

र्घविदधतांज्ञाव्यक्तांविरोधापत्तेः । झलिकिमिति । रामाणामि
त्यादिकंसन्निपातपरिभाषयानदोषसहम् । ततोवृद्धिर्लुकिहलीत्य
नुवर्त्यहलिपरतएवएत्वविधादितिप्रश्नः । अतिरिच्यमानंझल्ग्रहण
मेत्वविधावुक्तपरिभाषायाअनित्यताऽज्ञापयतितेन सर्वेषामित्यासिद्ध
मित्युत्तरम् । स्यादेतत् । बहुवचनेझलीगित्यस्तुलाघवात्सूत्रम्, मैव
म् । आद्यन्तौटकितावितिकिवागमस्यान्तावयवत्वादिगन्तनपुंसकत्वे
नेकोचीतिसूत्रेणज्ञानयोरित्यादौनुमापत्तेः । नचाद्गुणोन्तरङ्गत्वात्प्रव
र्त्ततेतिवाच्यम् । वार्णादाङ्गमितिन्यायेननुमएवप्रवृत्तेः । नचसमाननि
मित्तकत्वरूपसमानाश्रयत्वेएवायंन्याय इतिवाच्यम् । इयायइषेत्या
द्यसिद्धेः द्वित्वेकृतेअन्तरङ्गंसवर्णदीर्घन्यायेनैवबाधित्वावृद्धिप्रवृत्तौरूप
सिद्धिः । त्वदुक्तसमानाश्रयत्वाभावेनतदनङ्गतिःस्यादाङ्गवारणयोस्स
मानकार्यत्वेएवतत्प्रवृत्तिरित्यक्तेर्नदोषः । इहापीकारस्यनुम्स्यानि
त्वादाद्गुणइत्यस्यापि पूर्वपरयोरित्यादिनिर्देशेनेकारस्यस्यानित्वेन
समानाश्रयत्वात् । एतेनेहवार्णादाङ्गमित्यस्याप्रवृत्तेरन्तरङ्गत्वान्नु
मःपूर्वमेकादेशस्यैवप्रवृत्तिरितिमन्दोक्तमपास्तम् । ननुठकारोऽनु
बन्ध्यताम् । एवमपिसुबाद्यवयवत्वान्निर्जरेभ्यइत्यादौजरसादेशा
पत्तिरितिकेचित् । वस्तुगत्या एभ्यइत्यत्रनित्यत्वादिटिकृतेहलिलोपं
बाधित्वाऽनादेशापत्तेः । एतेनप्रतिपत्तिक्लेशवारणायतथान्यासोनकृ
तइतिमन्दोक्तमपास्तम् । ननुबहुवचनेस्म्येदितिन्यासोस्तुमैवम् । सुट्
तिथोरित्यादाविकारोच्चारणेननपुनरन्तरेणाचमित्युच्चैरिति सूत्रस्यज्ञा
प्येणचशास्त्राबाधिताजव्य वहितहलसमुदायस्यासाधुत्व बोधनात्
स्कोरित्यादिस्तुसौत्रप्रयोगइत्याहुः । यद्यपिपरइति । ननुइदंनसत्
नामीत्यस्यनित्यत्वात् कृतेपिसुपिचेतिदीर्घेपर्जन्यवल्लक्षण प्रवृत्त्याना
मीत्यस्यप्रवृत्तेरितिचेन्न । शब्दान्तरस्येतिन्यायेनानित्यत्वात् । नचै
कदेशविकृतेतिन्यायेनशब्दान्तरत्वाभावइतिवाच्यम् । शब्दान्तरस्येति
न्यायविषयएकादेशन्यायाप्रवृत्तेः । अन्यथोक्तन्यायस्यसर्वथावैयर्थ्या
पत्तेः । अतएवचिकीर्षतीत्यादावजझनगमामितिदीर्घेदीर्घस्यान्यथा

तु ह्रस्वस्येतिशब्दान्तरप्राप्त्याद्वित्वमनित्यमितिभाष्योक्तं संगच्छते। नच
नामशब्दसुच्चार्यविहितत्वेनप्रतिपदोक्तत्वात्नामीत्यस्यैवप्रथमंप्रवृत्ति
रितिवाच्यम्। प्रतिपदोक्तेपिनिरवकाशस्यबीजत्वेननामीत्यस्यनिरूप
यिष्यमाणावकाशत्वात् नाम्त्वसुटेवाश्रयणंनबहिरंगत्वंतूभयोस्समम्।
तस्मान्मूलोक्तं युक्तमेवेत्याहुः। परिभाषाविरोधादिति। अनित्यतस
र्वत्राभ्युपेयंत्यत्रमानाभावइत्याशयः। आरम्भसामर्थ्यादिति। सुपिचे
तितुरामाभ्यामित्यादौसावकाशमितिभावः। ननुषट्चतुर्भ्यइतिनुट्
कतीनामित्यत्रपरिभाषाप्रवृत्त्यभावान्नामीत्यपिचरितार्थम्। किञ्चस
रूपाणामित्यादिनिर्देशेनोक्त परिभाषायाअनित्यताभ्युपगमेपिरामा-
णामित्यादौपरत्वात्सुपिचेतिअस्यैवप्र वृत्ते रत्रनामीत्यस्योपन्यासोमो
घएव। नचचतुर्ग्रहणेनहलन्तषट्सञ्ज्ञकादेवनुट्नतुकतिशब्दादितिवा
च्यम्। द्विस्त्रिश्चतुरितिसूत्रेकृत्वोर्थग्रहणेनसाहचर्य्यस्यानित्यताश्रयणा
त्। यथाहलसञ्ज्ञकस्तथाऽम्सञ्ज्ञोपीत्यमन्तषट्सञ्ज्ञकादेवनुट्नतु
षकारान्तादितिषण्णामित्यत्रनुडनापत्तेश्च। तस्मात्कतीनामिहचरित
र्थ्यान्नामीत्यस्यकथंवैयर्थ्यमितिचेत् कतेर्नामीत्येवास्तुविशेषसूत्रम्नै
कमुदाहरणयोगारम्भम्प्रयोजयतीतिभाष्यकृदुक्तेः। योगारम्भमिति-
सामान्ययोगारम्भमित्यर्थस्तेनाग्नेय मित्यस्याग्नेढगतिप्रयोजकत्वम
व्याहतमितिभावोभाष्यकर्त्तुः। सामर्थ्यादित्यस्यसामान्यसूत्रारम्भसा
मर्थ्यादित्यर्थः। ननुह्रस्वनद्यापइत्यत्रनुतांतियोगंविभज्यसामान्येननु
ड्विधायनद्यापइतिदीर्घान्ताच्चेन्न द्यापएवेतिनियमाद्दीर्घान्तेषुदोषा
न्नहलन्ताच्चेत्षट् चतुर्भ्यएवेति. नियमाद्वाढुहमुहष्णुहस्निहामित्यादि
निर्देशाद्वाहलन्तेषूपपत्तिं प्रतिपाद्यह्रस्वग्रहण प्रत्याख्यायतंततश्चोक्त
परिभाषायाअप्राप्तेर्नामीतिनोपत्तीणामितिचेन्नैवम् नद्यापइत्यस्यस्त्री
लिंगाच्चेन्नद्यापएवेतिविपरीत नियमापत्तौमतीनामित्यादौनुडनाप-
त्तं रुक्तकल्पनावैफल्यात्। एतेनबहुश्रेयस्यादीनाम्पुंलिंगानामनदीत्व
दर्शनात्तिसृणामित्यत्रनामिदीर्घनिषेधाज्ज्ञापकाच्चस्त्रीलिंगाच्चेन्नद्याप
एवेतिनियमः कर्तुमशक्यः। दीर्घान्ताच्चेत्तिनद्यापएवेतितुसुकरएव।

आ।आविति प्रश्लेषेणसिद्धान्ते दीर्घाकारस्याग्रहणात् । तत्साहचर्यैण नदीसञ्ज्ञकानामपिदीर्घाणामेव ग्रहणादितिमन्दोक्तमपास्तम्।यतो नदीत्वस्यनित्यस्त्रीविषयत्वेनार्थान्नित्यमित्यस्यसिद्धत्वान्निवेशाद्वाति शब्दस्यचनियमानन्तर्गतत्वेनषट्चतुर्भ्यश्चेत्यत्रत्रेरित्यस्यानुवर्तनेनवा नुट्सिद्धोक्तज्ञापकसम्भवात्बहुश्रेयस्यादीनान्तुअर्थान्तरसंक्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादायतस्यार्थान्तर संक्रमेपिनदीत्वं वक्तव्य मित्यर्थकेन प्रथमेतिवार्त्तिकेनाभीष्टंतत् । वार्त्तिकाभावेपि यथोद्दे शपक्षे पूर्वप्रवृत्तांसञ्ज्ञांकार्यकालेप्यवयवगतामादायातिदिश्यते भा ष्येप्युक्तम् । अवयवस्त्रीविषयत्वात्सिद्धम् । अवयवोत्रस्त्रीविषयस्तदा श्रयानदीसञ्ज्ञाभविष्यतीति । तस्माद्बहुश्रेयस्याश्रयएवेहनुड्डितिपरिभाषा प्रवृत्तं नामीत्यारम्भ सामर्थ्यात्परिभाषाबाधतइत्युक्तम् । इयकोः किमिति । टाङसीत्यत्रसकारोच्चारणसामर्थ्यादेवदोषाभाव इतिप्र श्नः । तत्रसकारोच्चारणस्येयकोरित्यनुवृत्तावेवतास्त्वयंग्राहकत्वमन्यथा ऽमुष्येत्यादौषत्वंनस्यादित्युत्तरम् । विशेष्याभावात्सर्वाद्यन्तस्यसञ्ज्ञा नुपपत्तिरूमत्वातांसाधयितुंप्रतिजानीते। तदन्तस्यापीति । द्वन्द्वे चेति प्रथमार्थेसप्तमीयम् । द्वन्द्वस्सर्वनामसञ्ज्ञीनेत्यर्थः । नहितदन्तविधिं विनासमुदायेस्तिसञ्ज्ञाप्रसक्तियातेनपर्युदस्येतेतिभावः । नन्वङ्गाधिका रोक्ततदन्तविधिंविनैव परमसर्वस्मादित्यादौसिद्धेस्तदन्तसञ्ज्ञायाः किंफलमतआह।तेनेति । त्रलादौसञ्ज्ञाविधावितिनिषेधात्तदन्तवि ध्यज्ञावादित्याशयः।नन्विहावयवनिष्ठ सर्वनामत्वेनसुबुत्पत्तेः प्रागे वत्रलादयस्तैरस्यन्तीतिचेन्न। सुबन्तात्तद्धितोत्पत्तिरितिसिद्धान्तात् सर्वनामप्रकृतिकसुबन्तात्त्रलादयइतितत्सूत्रार्थेनपरमसर्वइति समु दायस्यैव सुबन्तत्वादितिदिक् । किंचप्रथमार्थेसप्तम्यन्तत्वादिदंसूत्रंस मुदायस्यैवसञ्ज्ञानिषेधकंपर्यवस्यति । अवयवानांनिषेधेतु वर्णाश्रमे तराणामित्यादौसर्वार्थवाचक सर्वाद्यन्तत्वेनसमुदायस्यसञ्ज्ञायांसुडा पत्तिः । अवयवस्यनिषेधेपिसर्वार्थवाचक सर्वादित्वानपायात् । अ तएववत्यतिसमुदायस्यायन्निषेधइति । नचावश्यवसर्वनामत्वेनाक

जापत्त्यातन्मध्यपतितन्यायेनशीभावस्स्यादितिवाच्यम्। विभाषाज
सीत्यत्रजसाधारेइत्याद्यर्थंवर्णकयत्नैवतद्धारणात्। एतेनवर्णाश्रमेत
रकाइत्यत्राकच्चिशीभावस्स्यादितिमन्दोक्तमपास्तम्। अवयवनिषेधे
फलाभावोपित्वच्छब्दस्यतान्तत्वेकाकचोर्विशेषस्तुनफलम् तस्यसर्वना
मत्वेदृढतरमानाभावात् बहुसंमतत्वाच्चेत्यधिकन्नागेशीये। वस्तुगत्या
येनविधीत्यत्राभाष्योक्ततदन्तस्य प्रयोजनंसर्वनामाव्ययसञ्ज्ञायामि
तिवार्तिकाद्विशेषशब्दस्वरूपस्य संभवाच्चविशेष्य विशेषणभावंनैवा
स्तान्तदन्तविधिः केवलानान्तुव्यपदेशिवद्भावेनसर्वादीनीत्यावर्तनेन
वासञ्ज्ञासिद्धिः। गौणेमहासञ्ज्ञयैवसञ्ज्ञाभावः। किञ्चद्वन्द्वे चेत्य
स्यज्ञापकत्वमेवनयुज्यते। द्वंद्वसमासेहिंचद्भूतावयवानुद्भूता वयवशे
द्रूपेसमूहोविशेष्यो घटकपदानिविशेषणानीति बहुव्रीहावियोपस
र्जनत्वंघटकपदानाम्। अतएवकुक्कुटमयूर्यावित्यादावुपसर्जनह्र
स्वत्वमाशंक्यद्वन्द्वे प्रतिषेधोवक्तव्य इतिवचनमवस्थापितंभाष्ये,कैयटे
चस्पष्टतरमिदम्। एतत्सर्वन्दर्शयिष्यतेसमासे एवञ्चेदमपिसूत्रन्नब
हुव्रीहावित्येतत्समानगतिकम्। तस्मादयमेवप्राकारश्चतुरचित्तेचम
त्कारचातुरींविधत्ताम्। नानुबन्धकृतमिति। इयञ्चानेकालित्य
त्रशिद्ग्रहणेनप्राप्यतइतितत्रसूत्रेउक्तम्। प्रागित्सञ्ज्ञाया इति। दृष्टा
न्तेतृइत्यत्रोपदेशएवोपदेशेऽजित्यनेन ऋकारस्येत्सञ्ज्ञेतिभवत्वन्त्या
देशः। इहतुतावत्सर्वादेशस्ततस्यानिबद्धावेन प्रत्ययत्वंततोलश
क्वितिप्रत्ययादित्वनिमित्तकत्सञ्ज्ञा ततशित्त्वंभवतीति दृष्टान्त
दार्ष्टान्तिकयोःसमतेत्याशयः। वस्तुगत्यानेकाल्सूत्रेइत्सञ्ज्ञायोग्यश
कारवत्त्वमेव शित्त्वंस्वीकृतमतोनशित्वादेवसर्वादेशःपरिभाषया अ
नेकाल्त्वाभावात्। तत्रहिअनुबन्धकृतमित्यस्यानुबन्धनयोग्यकृतमि
त्यर्थः। नचडाणलादौदोषः। डाआणल् इतिप्रश्लेषेणानेकाल्त्वात्स
र्वादेशसिद्धेः। एतेनेत्सञ्ज्ञायोग्यग्रहणेडाणलादीनांसर्वादेशताना
पत्तेरितिमन्दोक्तमपास्तम्। ध्वनितञ्चेदंलुटः प्रथमस्यानेकालिति
सूत्रयोर्भाष्येइत्यधिकं नागेशीये। अथोभादुदात्तोनित्यमुभस्य सर्व

नामत्वेकोर्थइतिभाष्यप्रयोगयोः प्रतिपित्सितद्वित्वार्थबोधकद्विवच
नान्ततयानुपपत्तिं सत्वास्वरूपाणामनुकरणे अस्मद्युत्तमइत्यादाव
नभिव्यक्तत्वादादेशाभाववदर्थे परस्यैवद्विवचनान्ततेति सूचयन्ना
ह। उभशब्दइति। उभश्चासौशब्दश्चेत्यर्थः। व्याप्यव्यापकयोर्मध्ये
व्याप्यस्यैवपूर्वनिपातोभीमभूपइत्यादावियतेन शब्दस्यविशेषणत्वा
त्पूर्वनिपातइतिनशंकनीयम् पञ्चकंप्रातिपदिकार्थइतिसिद्धान्तंव्य
वस्थापयति।द्वित्वेति। संख्याप्रकारक संख्येयविशेष्यकार्थाभिधायकइ
त्यर्थः। ननुप्रकृत्यैवसकलार्थबोधेविभक्तिरनर्थिका। किञ्चद्व्येकयो
र्द्विवचनैकवचने इत्यादिकमसंगतमित्याशंक्य द्योतकत्वेनैवविभक्तिः
सार्थिकासूत्राणितुनियमार्थान्येवेत्याह। अतएवेति।यतः प्राकृतयवा
र्थोऽस्मादेवहेतोरित्यर्थः। नित्यमित्यादि। द्विवचनान्तएवेत्यर्थः।
अनन्वितविभक्तेरपेक्षया अनुवादकविभक्तेर्न्याय्यत्वादितिभावः। ए
तत्सर्वंकारकेदर्शयिष्यते। ननुकिमर्थस्सर्वादिषूभशब्दपाठः। सर्व
नामकार्याणांस्मायादीनांद्विवचनेऽभात् नचसर्वनाम्नःतृतीयेतिसूत्रे
णषष्ठीतृतीयेतिपाठफलम्। निमित्तकारणहेतुषुसर्वासांप्रायोदर्श
नमिति हेताविति सूत्रेभाष्योक्तवार्तिकेनैवतयोःसिद्धत्वादतआह।
तस्येहेति। ननुकप्रत्ययेनैवसामान्यतोविहितेनसमीहितरूपसिद्धेः
कृतमकजर्थपाठेन। नचकाकचोःस्वरेस्तिविशेषः। प्रत्ययस्वरचि
त्स्वराभ्यामन्तोदात्तस्यैवसत्वात्।नचसुबन्तात्तद्धितोत्पत्तिरितिमतेअ
कचितरप्रयुक्तमन्तोदात्तत्व मुभकाभ्यामित्यादौसुबन्तस्य भवतिकप्रत्य
येतुप्रकृतेरित्यस्तिविशेषः तद्धितविधौप्रातिपदिकादित्य स्यैवाधि
रात् प्रातिपदिकस्यैवप्रकृतित्वात्सचजायमानोन्यायात्सुबन्तात्परइत्य
प्यदेतत्। नचओकारसकारजकारादौसुपिसर्वनाम्न ष्टेःप्रागकजन्यत्र
तुसुबन्तस्येतिसुबन्तप्रकृतित्वन्तवमतेविरुद्धम्।वचनप्रामाण्यात्।नचा
कचितन्मध्यपतितन्यायेनतस्योभग्रहणेन ग्रहणेउभकाववयवौयस्येत्य
र्थेउभकशब्दादयचि उभकयइतिप्रयोगोभवतिकप्रत्ययेतुनेतिविशेषः।
ईदृशप्रयोगस्यानभिधानस्यवक्तुंशक्यत्वात्। कश्चेदानींकाकचोर्विशेष

इतिसर्वादिसूत्रभाष्यप्रामाण्यात् । तस्मात्कप्रत्ययेनैवसिद्धिरित्यभि
प्रेत्यपर्यनुयुंक्ते । नचकेति । उभशब्दस्यद्विवचनपरत्वमकचाननिहन्य
ते । टेःप्राग्जायमानत्वेनतन्मध्यपतितन्यायेनोभयग्रहणेनोभकग्रह
णात्कप्रत्ययेनतुद्विवचनपरत्वं विहन्यते । प्रातिपदिकात्परत्रजाय
मानत्वेनव्यवधायकत्वादित्याशयेनसमाधत्ते । द्विवचनेति । अयच्प्र
संगादिति । उभशब्दात्त्रतसोःपरतःस्वार्थेयथाऽयच्भवतितथाकप्र
त्ययेपिस्यादितिभावः । तथाहिउभादुदात्तोनित्यमितिसूत्रंविभज्य
ते । उभादुदात्तइत्येकोयोगः । द्वित्रिभ्यामितिसूत्राद्वेत्यस्यनानु
वृत्तिरस्वरितत्वात् । तेनावयववृत्तेःसंख्यावाचिनःउभशब्दादवयवि
न्यर्थेऽयपस्यात् उभयोमणिः । ततोनित्यम् । उभशब्दाद्वृत्तिविष
येनित्यमयच्स्यात्स्वार्थेउभयतउभयत्रेतिसिद्धिः नन्वेवमकचिकृतेप्य
यन्दुर्वारोवृत्तिविषयेस्वार्थेनित्यमयजितित्वयैवोक्तत्वात्,नैवम् । योग
विभागस्येष्टसिद्ध्यर्थतयोभाभ्यामस्येति निर्देशेनचयत्रद्विवचनन्नश्रूय
तेतत्रैवायच्नतुवृत्तिविषयेइति व्याख्यानात् । ननुद्विवचनेनायजि
तिकिंराद्धामाणास्तितत्राशंक्यवार्त्तिकंप्रमाणयति । उभयोन्यत्रेति ।
उभयइतियःस्वार्थिकायजंतस्सोऽन्यत्र प्रयुज्यतेनतुद्विवचनंउभशब्दा
दुत्पन्नं द्विवचनंलुकानापहृतं यत्रततोन्यत्रायजिति विवक्षितार्थात् ।
तस्मादुभयशब्दपाठोऽकजर्थः सर्वादिगणइत्याहुः । भाष्येतूभशब्दपा
ठःप्रत्याख्यातः । तद्यथाकेप्यन्तरेणवचनंद्विवचनपरोभविष्यतिकथंस्वा
र्थिकप्रत्ययाःप्रकृतितोऽविशिष्टाभवंतीति । अयम्भावःयथाकच्यज्ञातो
प्रसर्जनेप्यवैजात्यार्थात्स्वार्थानुवादकद्विवचनपरत्वमस्तितथाकप्रत्य
यस्याप्यज्ञाताद्यर्थविशिष्टस्वार्थेविधानेन द्वित्वसंख्याप्रकारसंख्येयविशे
ष्यकबोधविषयार्थानुवादकत्वमिति । ननु कृत्रिमाकृत्रिमयोःकृत्रिमे
कार्यसंप्रत्यय इतिन्यायेनकृत्रिमस्यैवद्विवचनस्यवार्त्तिकेग्रहीतुमुचित
त्वम् अन्यथात्रतसिलादावतिप्रसक्तत्वादितिचेन्न । उभयशब्देनोभश
ब्दग्रहणवद्वार्त्तिकेद्विवचनशब्देना कृतिमस्यापिग्रहणेदोषाभावात् ।
अतएवोभयोरुभावित्यादीनायच् । किन्त्वत्रतसिलादौविभक्त्यंतरस्या

र्थैर्विहिताविति तत्कारकशक्तिप्रधानावेवेति न तदुक्तद्विवचनमिति दिक्। उभयशब्दस्येति। उज्ञावयवैयस्येति उज्ञादुदात्तो नित्यमिति तयपोऽयच् उज्ञयोऽन्यत्रेति वार्त्तिकेतयप्समानार्थं कोप्ययचगृह्यते उभयोर्मणिरुभयेदेव मनुष्या इति भाष्य उदाहरणात् स्वार्थिकस्य च ग्रहणं तदुपक्रमेणवार्त्तिकप्रवृत्तेः एवञ्चावयवद्वयारब्धमणिद्वयविवक्षयांभूतावयवभेद विवक्षया चोभयशब्दस्य द्विवचनमसाधुः॥ अतएवोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेनाव्ययत्वं प्राप्तं परिगणनं क्रीयते इति सद्धितश्चासर्वेति सूत्रे कैयट आचष्ट तदाह। कैयट इति। अनभिधानाद्भाष्ये उभयोर्मणिरुज्ञयेदेव मनुष्या इत्यस्यैव दर्शनाच्चेति भावः। हरदत्त इति। अयमुपक्षोऽहेयः। उक्तभाष्यविरोधादिति। तत्रतयपोऽयजादेश इति मतं गृहीत्वाह। तस्मादिति। उभयशब्दादित्यर्थः। जसीति। अवयवारब्धसमुदायत्वविवक्षायामित्यर्थः। अन्तरङ्गत्वादिति। अन्तरङ्गबहिरङ्गयोरन्तरङ्गंबलवदिति न्यायादित्यर्थः। अयञ्चांमाङोश्चेत्याङ्ग्रहणं नक्षाप्यते तद्विशिवश्च आङ्हीति स्थिते परमपि सवर्णदीर्घं बाधित्वाधातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वादाद्गुणे वृद्धिप्राप्तौ सत्यां परूपं यथा स्यादिति क्रियते यदि दीर्घ एव स्यात्तदा वृद्धिप्राप्तौ किं तेनेति समसारणाच्चेत्यत्र षष्ठे भाष्ये स्पष्टम्। ननु सर्वार्थबोधकत्वरूपार्थस्यापेक्षितत्वेन नित्यसंज्ञाया एव बहिरङ्गत्वमिति चेन्न। तस्य प्रथमचरमेत्यस्याप्यपेक्षितत्वात् अन्यथोपसर्ज्जनादौ प्रवृत्तिस्स्यात्। ननु नोक्तपरिभाषाया इह विषयः युगपत्प्राप्त्यभावात् नित्यसञ्ज्ञाप्रातिपदिकसंज्ञासमकालमेव प्रवर्त्तते। अतएवोभय इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः। वैकल्पिकेतु जस् निमित्तं, किञ्चैवंन्यायेनैव सिद्धे वैकल्पिकीमाशंक्यायच्प्रत्ययान्तरेण साधयता भाष्यकृता सह विरोधापत्तिः। तद्यथोक्तं स्थानिवत्सूत्रे तयादेश उज्ञय प्रतिषेध उज्ञयेदेव मनुष्याः तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति नैष दोषः। अयच् प्रत्ययान्तरम् यद्येवमुभयीलिङ्गीश्न प्राप्नोति माभूदेवं कथंमाञ्जिति प्रत्याहारग्रहणम् मात्रशब्दात्प्रभृति अयच् चकारात् तर्हि कतीत्यत्रापि प्राप्नोति। अतइतिवर्तते एव

नपितैलमात्राअत्रापिप्राप्नोति सदृशस्याप्यसन्निविष्टस्यनभवति प्रत्या
हारग्रहणेनग्रहणमिति। किञ्चविभाषेतिव्यवस्थितविभाषाश्रयणेनापि
सिद्धम्। नचभाष्योक्तातिरिक्तविभाषाया व्यवस्थितत्वमिन्द्रेचेति सू
त्रेणाप्रामाणिकमित्युक्तमितिवाच्यम् । तथवादेशायजयधप्रत्ययान्त
रयोफलाभेदायास्याःव्यवस्थितत्वस्य ज्ञगवताध्ननादितिचेत्सत्यम्
नवीनानुरोधेनतथोक्तेरित्याहुः। सुप्तिङन्तमितिज्ञापकादिति । त
त्सूत्रेसुप्तिङतीत्युच्यमाने प्रातिपदिकादिनाविशेषणत्वेन येनविधि
रित्यनेनैवसिद्धेर्व्यर्था दन्तग्रहणाज्ज्ञापकादित्यर्थः। तेनप्रयोजनंसर्व
नामव्ययसञ्ज्ञायामिति येनविधिरित्यत्रभाष्योक्तवार्तिकेन डतरान्तं
गृह्यतेइतिभावः। नचपरमकतरशब्देकथमितिचेत् प्रत्ययग्रहणेतद
न्तग्रहणमितिपरिभाषणात् डतरान्तेतुव्यपदेशिवद्भावेनबोध्यम्। तत्रै
वमानान्तरमाह। केवलयोरिति। प्रयोजनाभावात्फलाभावादित्यर्थः।
प्रकृतिप्रत्यययोरन्यतरप्रयोगाभावादितिभावः। नचकेवलाप्रकृतिःप्र
योक्तव्यानचकेवलःप्रत्ययइतिसमयात्। अयञ्चपरश्चेतिसूत्रेणज्ञाप्यते
तस्यवैयर्थ्यमुक्तं तृतीयेप्रकृतेज्ञाप्येकिमर्थमिदमुच्यतेपरोयथास्यात्पूर्वो
माभूदिति बहुचिपुरस्ताद्ग्रहणेनबहुजेवपूर्वोनान्यइतिज्ञाप्यते,नध्येत
र्हिमाभूदितिमध्येपिअव्ययसर्वनाम्नामितिप्राक्टेर्ग्रहणेननञ्भविष्यति।
यइदानीमतोन्यःप्रत्ययःशेषस्सोन्तरेणवचनम्परएवभविष्यतिनार्थःप
रवचनेनेति । प्रत्ययविधौसर्वविभक्तेःपञ्चमीकल्पनेनपरः पूर्वोवेत्य
नियमेनाध्याहारेप्रसक्तेपरएवेति नियमार्थमिदंसूत्रंतच्चतस्मादित्युत्त
रस्येत्यनेनसिद्धमितिव्यर्थंसज्ज्ञापयतीति कैयटेविस्पष्टम्। प्रकृतित्व
ञ्चप्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तमत्वं,ननुलिट् इयानित्यादौदो
षइतिचेन्न। शास्त्राबोधितापतरप्रयोगविषये एवान्यस्यन्यायस्यप्र
वृत्तेरितिदिक्। एतन्न्यायमूलकमेवापदंन प्रयुञ्जीतेतिपठ्यते । अ
परिनिष्ठितमितितदर्थः । परिनिष्ठतत्वञ्चाप्रवृत्तनित्यविध्युद्देश्यता
वच्छेदकानाक्रान्तत्वमितिदिक्। ननुबहुव्रीहावन्यपदार्थस्य प्रधान
त्वेनघटकपदार्थानां स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जन प्रति

षेधंनैवसञ्ज्ञाप्युदाससिद्धत्वाद्व्यर्थं सूत्रमित्याशंक्यबहुव्रीहाविति वि
षयसप्तमीत्वेनसमासात्पूर्वं सञ्ज्ञानिषेधार्थंतत्सार्थकमित्याशयेना
ह । त्वकमित्यादि । अज्ञातेकुत्सितेवाऽव्ययसर्वनाम्नामित्यकच्प्र
क्रियेति । अलौकिकविग्रहवाक्य इत्यर्थः । तत्त्वञ्चलोकेप्रयोगानर्ह
त्वम् तच्चयुष्मद्सुपितृसुइत्याद्याकारम् । नचालौकिकेसमासप्रवृत्त्यै
कार्थीभावस्यापि तत्रैवकल्पनादुपसर्जनादेव निषेधसिद्धौसूत्रस्यवैय
र्थ्यमेवेतिवाच्यम् । तत्रैकार्थीभावस्यारोपेप्युक्त रूपोपसर्जनत्वाभा
वेनातिभावकानित्यत्रेवप्राप्तस्याकचोऽभावार्थंसञ्ज्ञानिषेधइत्यत्रसूत्र
तात्पर्यात् । लौकिकेति । तत्त्वञ्चलोकेप्रयोगार्हत्वम् तदाकारस्तू
क्तएवत्वकंपितृकेत्यादिः । ननुतत्रापिनिषेधोस्तुमैवम् । लौकिकेस
मासस्यचिकीर्षितत्वाभावात् । नन्वास्तामकच्कोदोषस्तत्राह । श्रूये
तेति । नचाकृतव्यूहपरिभाषयाकचस्समासेनिवृत्तिः तस्यानित्यत्वा
त् । तत्रचज्ञापकञ्चेदंसूत्रम् । लौकिकवाक्यसमासयोर्दृष्टान्तावाह ।
अतिक्रान्तइत्यादिना । एवञ्चभाषार्थंसूत्रमितिवृत्तिकारमतम् । सि
द्धान्तमाह । भाष्यकारस्त्विति । अकच्स्वरौतुकर्तव्यौप्रत्यङ्गस्सुक्तसं
शयाविति भाष्योक्तिः । इकिपुत्रस्त्वकत्पितृकइत्याद्यनकारान्तेष्वक
च् विश्वप्रियइत्याद्यदन्तेषु स्वाङ्गशिटामदन्तानामित्याद्युदात्तस्स्वरइ
तितदर्थः । ननुस्मृतिद्वयबलाद्विकल्पस्याप्रत्याख्यानं कथमतआ
ह यथोत्तरमिति । तथाचेदानींपातञ्जलोक्तव्यवस्थैवज्यायसीतिभा
वः । ननुअविशेषात्सर्वनामसञ्ज्ञायाविधानात्सर्वत्रस्यादतआह । नस
र्वादयइति । सर्वनामत्वाज्ञावेनसर्वादिपाठाज्ञावइत्यर्थः । अयम्भा.
वः सर्वनामेतिमहासंज्ञाकरणमन्वर्थं सञ्ज्ञाविज्ञानार्थंम् । सर्वेषांनामा
नीति । तद्बलात्सर्वाभिधानसामर्थ्यंविशिष्टानामेव संज्ञित्वमनुमी
यते । एवञ्चतथाभूतानांगणेनुकरणावश्यकतयाप्रकारान्तरीभूताना
मनुकरणंप्रमाणाभावेनैवविशेषेऽवस्थितानांसंज्ञाना मुपसर्जनानांच
सर्वादिपाठबहिर्भावः । एकद्रव्योपनिवेशिनीहिसंज्ञा । इतरविशेषणो
भार्थीपस्थापकस्वञ्चोपसर्जनत्व मित्युभयभूतानामन्वर्थसञ्ज्ञाननुरूप

त्वात्सर्वनामत्वन्नास्तीति तदाह । महासंज्ञेति । अन्यथाटिघुभा
दिवल्लघ्वक्षरसंज्ञैवक्रियेत । प्रातिपदिकसंज्ञातुआथर्वणश्रुत्यनुरोधा
दितिदिक्। एवञ्चप्रवृत्तिनिमित्तेनप्रयुक्तादितरं प्रत्यनुपसर्जनीभूताए
वेहसंज्ञिनः । ननुकृत्स्नसकलादिशब्दानामति प्रसंगेतआह ।गणेइ
ति । पञ्चत्रिंशात्मकइत्यर्थः । सन्निवेश इति । तदनुमानादित्यर्थः
अन्वर्थसंज्ञायाःफलमाह । अतइत्यादिसंज्ञाप्रयुक्तं स्मायादिकमन्तर्ग
णकार्यन्तु अडडतरादिभ्यस्त्यदादीनामत्तदोस्सावित्यादिकमित्यर्थः
यत्रस्वरूपानाश्रयंकार्यं नतुगणपाठसंज्ञांवापेक्षतेतद्भवत्येव प्रकारान्त
रजुषाम् यथायुष्मदस्मद्भ्यांङसोश्इत्यादिकम् । युष्मद्युपपदेसमाना
धिकरणेइत्यादौतुनन्वमादिप्रसङ्गः । अभिव्यक्तपदार्थायेस्वतन्त्राइ
तिन्यायेनलोकप्रसिद्धार्थपरतायामेवत्वमादिप्रवृत्तेरितिदिक् । ननु
वार्तिकरीत्याएकसञ्ज्ञाधिकारे सर्वनामसञ्ज्ञानन्तरमेकद्रव्योपनिवेश
नीसञ्ज्ञेतिसञ्ज्ञायांसर्वनामसञ्ज्ञाबाधिष्यते । किञ्चपूर्वापरेतिगणसू
त्रेऽसंज्ञायामिति योगंविभज्यपूर्वोत्तरयोश्शेषोव्याख्येयः । पूर्वाद
योवक्ष्यमाणाः श्वादयश्चासञ्ज्ञायामिति । अपिच । संज्ञाव्यावृ
त्तिर्गौणमुख्यन्यायेनापि सेत्स्यति तथोपसर्जनव्यावृत्तिरप्यन्यथैव
तद्यथा अनुपसर्जनादितिसूत्रेऽनुपसर्जनेति लुप्तषष्ठीकंपदम् । अ
आदितिच्छेदः । अश्चआश्चतयोस्समाहारआत् । अकारादपरावअदि
त्यादेशौयत्रक्रियेते तत्रानुपसर्जनस्यग्रहणमितितदर्थः । तेनादङ्त्य
दाद्यत्वञ्चगौणेनभवतीति सर्वज्ञाख्यंस्पष्टम् तथाचमहासञ्ज्ञाविफलै
वेतिचेन्न । अतिसर्वायेत्यादिसाधनफलकत्वात् । ननुतदोसःसावि
तिसूत्रेऽदसएवदस्यनान्यस्येति नियमेद्वीयतेरप्रत्यये द्वइतिप्राप्नोति
स्वइतिचेष्यतेऽत्वसत्वयोर्गौणेत्रारणस्यसिद्धधान्तितत्वादितिचेन्न।न
स्येकदेशयुक्तित्वेनादोषात्। अन्यथाप्रकृतसूत्रस्यानेकभाष्यविरोधस्स्या
दितिसंक्षेपः।ननुजराशब्दस्यादेशविधानान्निर्जरशब्दस्यकथमतआह।
पदाङ्गेति । पदमङ्गंचविशेष्यंविशेषणेनतदन्तविधेर्लाभादितिभावः।
इदञ्चयेनविधिरितिसूत्रस्यप्रपञ्चभूतमेव नन्वपूर्ववचनंसोपपदस्यादे

ह । निर्दिश्यमानस्येति । षष्ठीस्थानेयोगेतिसूत्रमावर्तते । तत्रद्विती
यस्यायमर्थः षष्ठ्यन्तमुच्चार्यमाणमेवस्थानेन स्थाननिरूपितसम्बन्धेन
युज्यते नतुप्रतीयमानमितितेनेयंपरिभाषानिष्पन्ना । नचास्यरचावित्य
त्राकारस्यैवनिर्दिश्यमानत्वात्स्यालीभवतीत्यादा वादेशोनस्यादिति
वाच्यम् । तत्रजातिपक्षाश्रयणात् । नभूसुधियोरितिनिषेधसामर्थ्यंनग्र
हणकशास्त्रगृहीतानांनिर्दिश्यमानकार्यित्वबोधाच्च । नन्वियङुवङो
ङित्त्वंव्यर्थं,निर्दिश्यमानत्वेनैवान्त्यादेशस्यङित्त्वंविनाप्युप पत्तेरिति
चेन्न । धातोरपिनिर्दिष्टत्वादन्त्यादेशत्वार्थंतस्या वश्यकत्वात् । दीङ्
रिङोङित्त्वन्तुस्पष्टार्थमित्यधिकंनागेशीये । नन्वयंजरशब्दोनजराश
ब्दोऽतआह । एकदेशेति । एकदेशविकृतमनन्यवदिति न्यायशरीर
म् । अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यशब्दस्यनिषेधेऽन्यत्वाभा
वस्सुतराम् । अतएवतादृशादर्थबोधः । अन्यथाशक्ततावच्छेदकानुपू
र्व्यज्ञानात्ततोबोधएवनस्यादिति शब्दकौस्तुभगुणेविवेचितमस्माभिः ।
इदञ्चप्राग्दीव्यतइत्यत्रचतुर्थभाष्येस्पष्टम् तद्यथादीव्यतइति कोयंश
ब्दोदीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदम् किमर्थंविकृतनिर्दे
शः । एतदेवज्ञापयत्याचार्योभवत्येषापरिभाषा एकदेशविकृतमनन्य
वदिति यत्रत्वर्द्धंतदधिकंवाविकृतन्तत्रजातिव्यञ्जकत्वयो ऽवयवद
र्शनाभावेतत्वाप्रवृत्तौकार्यसिद्ध्यर्थं विकृतानलरूपावयव प्रतीत्यर्थ
ञ्चस्थानिवत्सूत्रमितिदिक् । परत्वाज्जरसिति । जरायाइतिसूत्रेण
जरसावित्यादौसावकाशम् । टाङसीत्यादिकन्तुरामेणेत्यादौसावका
शम् । इनादिविषयेविप्रतिषेधशास्त्रप्राबल्याज्जरसादेशएव । वृत्तिकृ
तेति । इतिकेचिदित्युक्तमित्यन्वयः । किमुक्तं तदाह । पूर्वविप्रतिषेधे
नेत्यादि । विप्रतिषेधसूत्रेपरशब्दःक्वचिदिष्टार्थवाची । इष्टश्चेनाद्यादेश
एव सचनादेशेविधातव्य इकारदीर्घोकारौक्वचिदपिस्वरूपश्रवणफ
लकौविधत्तस्सूत्रकृतस्सभाष्यकारस्त इतिसदभिमानः । तर्हिसन्निपातप
रिभाषयाकथंजरसित्यतआह । अनित्यत्वमिति । अत्रापीकारदीर्घा
नुकरणमेव ज्ञापकमित्यभिमानः । तदनुसारिभिरिति । येतुनिर्जरसिने

त्यादिव्याचक्षते तेषांमतानुयायिभिरित्यर्थः। षष्ठ्यें कमवचनेइति। एक
सूत्रोपात्तत्वात्स्यादेशविषयेपि पूर्वविप्रतिषेधाश्रयणमितितद्भावः।
एतच्चभाष्यइति, इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः।
जरायाइतिसूत्रेसप्तमेइष्टमेतत्संग्रहीतम् निर्जररितिजवितव्यंसन्निपा
तपरिभाषयेतिभाष्येतिचार्थः। इत्थंहिप्रत्याख्यातम्। टाङसीतिसू
त्रेनादेशोदादेशश्चास्तु। आङिचापइति सूत्रेआङिचेतियोगं विभज्य
बहुवचनेझलीत्यनएत्वमनुवर्त्याङिच परेएत्वंस्यादितिविभक्तेनसूत्रा
थेनसमीहितरूपसिद्धेः। नचनादेशेकृतेहलिलोप प्रवृत्यानेनेत्येतन्न
सिध्यतीतिवाच्यम् अनाप्यक इत्यत्राऽनापीतिच्छित्वा नपुंसकात्स्वो
लुकिनलोपेनापीस्सम।हारेसप्तम्येकवचनंनकारेपरतोविशिष्यानादेश
विधानसामर्थ्यंनहलिलोपा प्रव[illegible]ः नचङसेरदादेशेपररूपापत्तिः।
अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति। अन्येतु अयंभाष्यविरोधो
निर्जसिनेत्यादिरूपांशेनतु पूर्वविप्रतिषेधांशेजरायाइति सूत्रेभाष्येज
रसादेशविभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात्। तद्यथाजरां
सीत्यत्रनुम् जरसोःप्राप्तयोर्विप्रतिषेधेनजरांसिति विभक्त्यादेशात्पूर्वं
जरसः प्रवृत्तौतुशिभावात्पूर्वञ्जरसिकृते तदासर्वनामस्थानत्वाभ।
वान्नुमाविप्रतिषेध विचारसङ्गतिः किञ्चटाङसीतिसूत्रेकैयटः भा
ष्यकारस्संनिपात परिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिज
रादिति भाष्यन्तु अतिजरसिनातिजरसादिति गौरवमुद्भावितवा
निति विभक्त्यादेशात्पूर्वञ्जरसादेशेतु इनाद्यप्राप्त्यासन्निपात परि
भाषया जरसादेश मनभ्युपयन्नित्यस्यासङ्गतिरितिदिक् तस्माद्भाष्ये
ष्टेनपूर्वविप्रतिषेधेन विभक्त्यादेशेकृते ततस्सन्निपातपरिभाषायाअत्र
भाष्येसंचारितयानजरसित्याहुः। तदपरेनहसन्तेविभक्तिसञ्ज्ञाद्यन
पेक्षत्वेनान्तरङ्गत्वाज्जर सादेशंबाधित्वा शिभावेतस्यविप्रतिषेधवि
चारसंगतिः अतएवातिजरसंपश्येत्यत्र संनिपातपरिभाषयालुग्बा
रणंभाष्येसंगच्छते। व्याख्यातञ्चकैयटेन। परत्वान्नित्यत्वाच्चा
म् भावात्प्रागजरसिकृतेऽनदन्तत्वादमोप्राप्त्यालुकः [प्राप्तिरिति।

पदन्तुनसत् संज्ञाकृतबहिरंगत्वस्यानाश्रयणाद् इतिदर्शयिष्यतेस्त्री प्रत्ययेऽभिभावस्यापिक्लीबत्वाद्याश्रयणाच्च । नन्वेकस्यैकैवसंज्ञेतिसूत्रबोधितेविशेषानवगतिस्तदाह।यापरेति।द्वयोस्सावकाशयोःपरैवैकस्यानिरवकाशत्वेतुनिरवकाशैवेत्यर्थः । ननुसञ्ज्ञयैवसञ्ज्ञाबाध्यतांपरत्वादिनाकृतंसूत्रेणेतिचेन्न। अधिकारातिरिक्तस्थलेतव्यदादौकृत्कृत्यप्रत्ययसंज्ञादीनांसमावेशदर्शनेनविरोधाभावाद्विप्रतिषेधसूत्राप्रवृत्तेः । नन्वेवं विप्रतिषेध सूत्राप्रवृत्तौकथमत्रपरत्वादिवर्णनमितिचेन्नैवम्परत्वादेरन्यत्रप्रबलत्वेनदृष्टतयात्रापितादृशरीत्यैव व्यवस्थोपपत्तेः । नचराजन्य इत्यादौसुप्तिङन्त मित्यनेनपदत्वंस्यादेव परयाभसंज्ञयातुनबाध्येतपदसंज्ञाया अन्तरङ्गत्वादिति शंक्यम् । समानावधिकाया अन्तरंगाया अप्यनयाबाध्यसामान्यचिन्तयाऽपवादत्वेनैवबाधात्क्वचित्समानावधिकयोरपिसञ्ज्ञयोस्समावेशस्तुगमकबलादेवेतिदिक्।तेनेति। अनवकाशत्वेनेत्यर्थः पदसञ्ज्ञायास्सर्वनाम स्थानवर्जहलजादिविषयः । भसञ्ज्ञायास्त्वजादिरित्येत द्विषयेपिपदसंज्ञाप्रवृत्तौभसञ्ज्ञानिरवकाशैवेत्यभिप्रेत्याह । शसादावचीति । पूर्वस्मादिति । अचः परस्मिन्नित्यत्रपूर्वस्माद्विधिरितिपंचमीसमासस्याप्याश्रयणादयमर्थोलभ्यतेइति भावः। इतिपक्षेत्विति । तुनास्यपक्षस्यानित्यताबोध्यतेइत्यन्यत्रवक्तव्यम् । अड्व्यवायइत्येवेति।अट्कुप्वाङित्यनेनैवेत्यर्थः। एवकारस्साधकान्तराभावंव्यनक्ति । पूर्वत्रासिद्धमिति । इयञ्चपरिभाषान्यायसिद्धार्थानुवादिका । त्रिपाद्याअसिद्धत्वेनतत्रत्ये कर्तव्येऽचः परस्मिन्नित्यतिदेशस्याप्रवृत्तेः । एतत्फलन्त्विति देशान्तराणांवत्यर्थघटितानांत्रिपाद्याम प्रवृत्तिबोधनम् तेनामीढोरपेणेत्यादौ णीत्वणत्वेसिध्यतः । तत्रैकारस्यादस्संबन्धित्वं येइत्यस्यैकाज्उत्तरपदत्वज्ञान्तवद्भावाधीनम् तस्यदोषइति । इदंवाचनिकंनतु ज्ञापकसिद्धम् । ननुनेडित्यत्रनेतियोगविभागस्य भाष्येऽदर्शनेन तस्यज्ञापकत्वाभावादित्याहुः । तस्यपूर्वत्रासिद्धमित्यस्यदोषोबाधस्तथाचस्यलत्वयेस्यानिवद्भावोवक्तव्यइति तदर्थः । ननुलाघवाच्छसादावितिव

क्तव्यं यत्राधिक्यं किमर्थमत आह प्रकारार्थमिति । प्रकारश्च सादृश्यं
तच्च साधारणधर्मसम्बन्धप्रयोज्यम् साधारणधर्मवत्त्वं चोपमानोपमेयो
भयवृत्तित्वम् । उपमानत्वं साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्व
मुपमेयत्वमपि साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम्। तथा चस्वा
दौशसादौचोभयत्रापिसुप्त्वस्य साधारणधर्मस्यवृत्तित्वात्सुप्त्वेनैवसा
दृश्यम् तद्ध्वनयन्नाह। औङ्श्यामिति। तत्रैवमानमाह। भाष्येइति। त
त्रहिशसप्रभृतिष्वित्युच्यतेऽशसप्रभृतिष्वपिदृश्यते ककुद्दोषणीयाचते स
हादेव इत्युक्तम् अस्यभाष्यस्यापिसुप्त्वेनैव सादृश्यमित्यत्रैवस्वरसः ।
प्रायोज्यनञ्घटितेननञिवयुक्तमन्य सदृशाधिकरणे तथाह्यर्थावगतिरि
तिन्यायेनसदृशार्थावगमात् । तदुक्तं भाष्येऽब्राह्मणमानयेत्युक्ते ब्राह्म
णसदृशमानयति नहिकश्चनलोष्टमानीयकृतीभवतीति । अन्यथान्य
त्रापिदृश्यत इत्युच्येतेति सर्वसंवादचिन्तामणौव्यक्तम् एवञ्चमांस्पच
न्याः पदंघ्रिः हृन्मानसमित्येतेषुनलुमताङ्स्येत्यस्यानित्यत्वेनस्वादि
परत्वंबोध्यम्। एतेनशब्दत्वेन प्रत्ययत्वेनवासादृश्यमितिकेषांचिदुक्तिर
पास्ता । वाशोकष्यञ्रोगेष्वित्यस्यवैयर्थ्यापत्तेः । अत्रसुप्रभृतिष्वितिवा
च्येशसप्रभृतिष्वित्युक्त्याऽन्यत्रक्वचिदेवप्रवृत्तिर्बोध्यते ऽतएवयत् हृन्नि
शांग्रहणंचरितार्थम्। तेषांद्विविधानामपिकोशसिद्धतया तत्रतुस्वतन्त्रो
ष्टुरित्यत्रैवव्यवस्थार्थतायाएववक्तव्यतयासुब्मात्रेप्रवृत्तौतस्या असंभ
वेन तद्वैयर्थ्यमेवस्यादितिदिक्। काशिकायाः प्रामादिकत्वमुक्तं ध्वन
यन्विवृणोति। आस्येभवमिति। शरीरावयवाद्यत्। तथा चश्रुतिः आस्नो
वृकस्यवर्तिकामित्यादि। तत्रवृकस्यआस्नोमुखादित्येवंनिरुक्तार्थात् ॥
अतएवेति । ककुद्दोषणीइति प्रयोगादेवेत्यर्थः। यद्यपिककुच्चदोषच्चेति
समाहारद्वन्द्वे एकशेषे चकृतेभाष्य मन्यथोपपन्नंदोषशब्दस्यनपुंसकत्वं
प्राप्नोति। तथापिककुच्छब्दस्यपृथक्पदत्वंयुक्तम् । अन्यथाबाहूद्वित्वे
ऽप्येषिककुदित्यस्यैकत्वं नलभ्येतेत्याशयः। तेनलमुपाद्रवदुद्यस्यदक्षिणां
दोर्निशाचरइतिरघुकाव्यमनुगृहीतंभवति । तत्रदक्षिणंदोर्बाहुमुद्यस्य
लक्ष्मणमुपाद्रवदितिसम्बन्धः। साहचर्यादिति । पुल्लिंगादिनिर्णायकंसा

ह्वचर्यादिक्रमपिस्व संकेतेनोक्तममरसिंहेन प्रायशोरूपभेदेनेत्यादिने
तिभावः । दोषमिति । दोषंतस्यतथाविधत्यजतश्चापस्य गृह्णन्‌गु
णामितिनैषधः । दोषंहस्तंदूषणांचभजतश्चापस्येतिसंबंधः।ननुदीर्घाज्ज
सीति सूत्रयतां, प्रथमयोःपूर्वसवर्ण इत्यनेनसिद्धेदीर्घाज्जस्येवपूर्व
सवर्णदीर्घ इत्यर्थकेनियमेनादिचीत्यत इचीत्यपकर्षणार्थश्चकारोनुव
र्त्तितनकारश्चनाश्रयणीयः । किंचशस्यप्यातोधातोरित्यस्यैवेह प्रवृत्ते
रत्रानुपयुक्तं चेदंसूत्रमितिध्वनयन्नाह।यद्यपीत्यादि । उक्तं नियमफ
लन्दर्शयति। गौर्य्यौगोर्य्यंइति । इत्याद्यर्थमिति । नियमत्वेनपूर्वस
वर्णदीर्घव्यावृत्त्यर्थमित्यर्थः । न्याय्यत्वादिति । विश्वपाशब्दोपिशसि
प्रवृत्तियोग्यत्वादित्यर्थंइत्याहुः । यद्यपिक्कोल्यब् अभ्रशानवभ्रावित्या
दिसूत्रगतंसौत्रत्वादेवनिर्वोढुंशक्यते तथापिक्कोल्यब्जवतिअभ्रशानवभ
वतीतिव्याख्यान वाक्यस्यन्तत्साधयितुंवार्तिककृताद्यातो ऽनापइ
ति वक्तव्यमित्यारब्धंतच्चभाष्ये प्रत्याख्यातंयोगविभागेनतदाह आत
इति । एवञ्चभाष्यवार्तिक कृताएवनिर्णयोक्त आकारस्सर्वोपिलो
पविषयइति स्वरसः । तर्हिधातुग्रहणंव्यर्थमातइतीयतैव सिद्धेरिति
चेन्न आबन्तव्यावृत्तिफलकत्वात् । एवञ्चधातोः किंहाहान् अव्युत्
पन्नमिदम् । यदिहेतिकष्टेजहातीति क्रियाशब्दस्तदा अकारोवासुदे
वस्तेनसहवर्ततेसास्तान् सानित्यत्रलोपस्स्यादतो धातुग्रहणमित्यु
क्तिरसमाजग्रस्ता अव्युत्पन्नहाहाशब्दाद्धौप्रमाणीभूताभिधाने साश
ब्दाद्धौवालोपस्य भाष्यवार्तिकयोरिष्टत्वात् । एतेनाचारक्विबन्तात्क
र्तृक्विपैतेप्रयोगानिर्वाह्याइत्यपास्तम् । आचारक्विबन्तस्यजाष्येकाप्यनु
पन्यासेनादन्तेभ्यः कर्तृक्विपोनभिधानस्यैवलाभाच्चेतिदिक् । शेषःकि
मिति । पूर्ववर्तिनायूस्त्र्याख्यावित्यनेन नित्यस्त्रीलिङ्गयो दीर्घेदूदन्त
योर्नदीसञ्ज्ञाविधानात् ङितिह्रस्वश्चेत्यनेनचदीर्घेदूदन्तयोस्त्रीलिङ्ग
योर्ह्रस्वेदुदन्तयो र्विकल्पेननदीसञ्ज्ञाविधानात् । ऽयसखीत्यपियूह्र
स्वपदेअनुवर्त्य तत्रैवसामान्यतोघिसंज्ञाविधानेन समीहितरूपसि
द्धेः शेषपदंव्यर्थमितिप्रष्टुरभिप्रायः । मत्यैइति । नंदीत्वपक्षेपि

घित्वे सत्यांयानद्या इत्याडागमे घेर्ङितीति गुणोऽवादेशेचमतये इत्य
निष्टमापद्येतेत्युत्तरयितुर्भावः । वस्तुतः पुन्नपुंसकयोः प्राप्तौसावकाशां
घिसञ्ज्ञां बाधित्वा मत्यैइत्यत्रानवकाशत्वान्नदीसञ्ज्ञैवभविष्यतीति
व्यर्थशेषग्रहणमित्याशयेनाह एकेति। अधिकारादिति । कडाराःकर्म
धारयइत्येतत्प र्यन्तमधिकारस्य बुद्धिस्थत्वादित्यर्थः । नन्वेवंपुरुषपर
स्मैपदसञ्ज्ञयोरेकत्रसमावेशःकथम् । कथञ्चगुरुनदीत्वयोर्लघुघिसञ्ज्ञ
योरितिचेन्न । णलुत्तमोवेतिज्ञापकादेवसमाधानात् । अंत्येचगु
रुलघुसंज्ञेवर्णस्य नदीघिसंज्ञे तदन्तस्येति भिन्नावधिकत्वात्सम।वे
शादितिदिक् । स्पष्टार्थमिति । स्पष्टतयातदन्तविधिलाभार्थमिति
भावः । यूक्किमिति । ह्रस्वइत्यनुवृत्त्यानिर्देशज्ञापकादिनेष्टप्रति
पत्तावपिविशेष्येणेदुतोरप्यनुवृत्तौकिंफलमितिप्रश्नः । मावेइति ।
अत्रघित्वेघेर्ङितीतिगुणःस्यादिति घित्वनिवृत्तिःफलम् । ननुअतो
ङीतिगुणेनव्यर्थेन ऋदन्तेघिसंज्ञाभाव ज्ञापनेनात्रदोषाभावस्तस्मा
त्परिच्छेतृवाचिनोमातृशब्दस्य टाविभक्तौघित्वेसति आङोनेतिना
त्वापत्त्यामात्रेतिप्रत्युदाहर्त व्यमितिचेन्न । अतोङीत्यस्ययूइत्यनुवृ
त्तावेवतात्पर्य ग्रहफलकत्वान्मुक्तेर्युक्तत्वात् ननुयूस्त्र्याख्यावित्यत्रैव
यूग्रहणन्नकर्त व्यंङेराम्नद्याम् ह्रस्वनद्यापइति ज्ञापकेननेयङुवङ्स्था
नेतिनदीत्वनिषेधे इयङुवङ्स्थानत्वेनाचिश्नुइत्यत्रयोरेव प्रसिद्धत्वे
नचेदूदन्तेरेवस्त्र्याख्यन्नदीत्ये तावतासूत्रेणसिद्धेस्तत्कथमत्रानुवृत्ति
रितिचेन्न । अनेकगौरवापत्तेः । ननुदीर्घयोर्यूइतिनिर्देशासंगत्याह्र
स्वयोर्ग्रहणमस्तुदीर्घयोस्तु ग्राहकत्वात्सिद्धेः । नचाणुदित्यत्रा
शब्दसंज्ञे त्यनुवृत्तिरन्यथोकालसूत्रेग्राहकतापत्तिः । नेयङुवङित्यत्र
निषेधपर्युदासाभ्यांसवर्ण ग्रहणस्यज्ञापनात् । तदुक्तं भाष्ये ऽविशेष
णनदीसंज्ञाउत्सर्गस्तस्या ह्रस्वयोर्घिसंज्ञापवादइति स्त्र्याख्यस्यह्रस्व
दीर्घैसञ्ज्ञातुवाध्यत्वलक्षणसादृश्यादुत्सर्गइतिव्यवहार इतिचेन्न ।
अनेकक्लृप्तशक्त्यपनापेक्षया दीर्घयोरेवनिर्देशइति पक्षस्यैवसुकरत्वात्
छन्दोवत्सूत्राणीतिभाष्योक्ते र्निर्देशोपपत्तिः । ननुयूइतिकिमर्थमित्या

शंक्यमात्रेमातुरित्यादावाण्नद्याहत्याट् प्रसज्येतेति भाष्योक्तमसंगतंन
द्युतश्चेति ऋग्रहणेनऋदन्तानांनदीत्वाभाव बोधनादितिचेन्नैवम् ।
अल्प्ययैवबहुपितृकइत्यादौ कप्फलत्वादित्याहुः । ननुचेङीत्येवास्तु ।
यस्मिन्विधिस्तदादाविति परिभाषया ङकारादौसुपीत्यर्थेन सकल
लक्ष्यनिर्वाधत्वात् । नचाङ्याजयागमुपसंख्यानमिति वार्तिकेना
ङादेशेङादित्वाभावेन गुणाप्रवृत्तेःप्रवाह्वंतिरूपासिद्धिरितिवाच्यम्
तत्रापिङादेशस्यैव विधेयत्वादितिचेन्नैवम् । आण्नद्याइत्यत्रापि
ङीत्यस्यानुवृत्तावल्विधित्वेनस्थानिवद्भावा प्रवृत्त्यामत्यामित्यादावा
डागमानापत्तेः । इङ्ग्रहणेतुअनुवन्धकार्यत्वात्स्थानिवद्भावः सुलभ
इतिस्त्रीप्रत्ययेस्फुटीभविष्यति । ननुसुतरांसखेतिविग्रहीतेराजाहः स
खिभ्यइतिटचाभाव्यमित्याशंक्यनपूजनादिति निषेधप्रवृत्तये विवृणोति
शोभनःसखासुसखेति । एवमतिशयितसखेत्यत्रापिबोध्यम् । ननुसखि
शब्दस्यविहितंकार्यंकथमत्रस्यादतआह ,अङ्गत्वादिति । तत्तत्कार्य
स्याङ्गाधिकारस्यत्वेनाधिकृतमंगं प्रतिसख्युर्विशेषणाद्येनविधिरिति
प्रवृत्तेस्तदन्तलाभादितिभावः । सखेत्यादौव्यपदेशिवद्भावेनबोध्यम्
शेषोध्यसखीत्यत्रनञ्नप्रसज्य प्रतिषेधकोऽसमर्थसमासादितिदोषात्
किन्तुपर्युदासकःसचसदृशग्राही । सखीसदृशश्चसमुदायोनास्तीत्यभि
प्रेत्याह समुदायस्येति । ननुपर्युदस्समानसमर्पकसखिसव्देत दन्तग्रहे
समुदायस्यापि सखिशब्दान्तभिन्नत्वाभावेनकथमत्रनिषेधाभावइतिचे
न्नैवम्विशेष्यासन्निधानेन येनविधिरित्यस्याप्रवृत्तेस्तदन्तलाभात् ।
सत्यपिविशेष्येसखिशब्दभिन्नान्तस्येत्येवार्थोनतु सख्यन्तभिन्नस्येति ।
नञैकार्थीभावापन्नस्यसखिशब्दस्यान्यत्रान्वयायोगात् । यस्येतिचेति
सूत्रेभाष्यकारस्त्वत्रापिअसखीतिघिसञ्ज्ञानिषेधमभिप्रैति।तद्यथा।इव
र्णस्यकिमुदाहरणमतिसखेरागच्छति । यद्यत्रलोपोनस्यात्तदाप्रकृतीका
रस्यङीपाश्चदीर्घेपूर्वान्तवद्भावेन सखिशब्दत्वादुपसर्जनह्रस्वत्वेकृते
पिघिसञ्ज्ञानस्यात् लोपेतुलक्षणप्रतिदोक्त परिभाषयानदोषोभवती
ति । सखिशब्दस्यतदवयवेलक्षणा ततश्चसख्यवयवभिन्नयोरिदुतो

रितिवर्णसञ्ज्ञापक्षेतरसूत्रार्थः । इद्वर्णान्तसञ्ज्ञापक्षेप्यसखीतिवो रेवविशेषणं ततस्तदन्तविधिः । ललग्रसख्यन्यवज्जितेवर्णो वर्णान्त मितितदर्थः । एवञ्चप्रकृतेनचिसञ्ज्ञेतिभावोभाष्यकृतः । पूर्वरी त्यातुविशिष्टस्यसखिभिन्नत्वेन घिसञ्ज्ञानिर्बाधैवेति भाष्यासंगतिरे वेतिदिगित्याहुरन्ये । एतेनशेषःइयसखिपती पतिसखी समासएवे तिवासूत्र्यतामितिपरास्तम् । उक्तन्याय्यरीत्यासुसख्येत्यादीष्टासि ध्यातथान्यासस्यकर्तुमशक्यत्वात् । इहपतिनासखिनेत्यादिपुराणा दौदृष्टत्वसाध्वेवैतद्व्याकरणानिष्पन्नत्वात् । ननुपरमश्वासौसखाचेति विग्रहेनपूजनादित्यस्या प्रवृत्तेष्टस्यादित्यतआह यस्येतिविग्रहइ ति । नन्वेवंसत्युपर्ज्जनत्वंतच्चेतरविशेषणत्वेनार्थोपस्थापकत्वमित्यु क्तंतरकथंतत्कार्यमित्याशंक्यबाधकवचनाभावाद्विशेषणञ्चविन्यतीत्या ह । गौणत्वेपीति । उपसर्जनत्वेप्यस्थ्याद्यनङ्वदित्यर्थः । नचगौ णमुख्ययोरितिबाधकम् अत्रगौणत्वाभावात् अप्रसिद्धलाक्षणिकत्वा न्यतररूपत्वस्यैवतत्त्वात् गौणोपसर्ज्जनयोःपर्यायत्वेपिन्यायेनैवसिद्धे उपसर्जनानांसर्वनामत्वनिषेधपरवार्तिक भाष्यादयोविरुद्ध्येरन् न्याय स्यपदकार्यप्रवृत्तश्चेतिदिक् । सखीशब्दे सख्यशिश्वीतिभाषामिति ङी षन्तेपिलिङ्गविशिष्टपरिभाषया सखिकार्यमाशंक्याह । अनित्यत्वा दिति । शक्तिलांगलांकुशेतिवार्तिकेघटघटीग्रहणमत्रलिङ्गम् । उप सर्जनेप्युक्तंकार्यमाशंक्याह । इहेति । लाक्षणिकत्वादिति । लाक्ष णिकस्यानुमीयमानरूपत्वात्प्रतिपदोक्तस्य प्रत्यक्षत्वादितिपरिभाषा बीजम् । ननुबाधकाभावादविशेषा दुपसर्जनेप्ययादेशःस्यादतआह । गौणत्वेतुनेतीति । उपसर्जनेतुनेत्यर्थोयथानन्तरोक्तस्याभिसर्वनाम्न इत्यस्यानुपसर्जनेएव प्रवृत्तिस्तद्वत्तत्साहचर्यादस्यापीतिभावः । केचि दिति । अत्ररुचिबीजन्तुसाहचर्यस्या सार्वत्रिकत्वंसूत्रान्तरस्यतदा श्रयणेदृढतरप्रमाणाभावश्चेति अतएवाहवस्तुतइति । गौणमुख्य न्यायस्यात्रप्रवृत्तौसमनन्तरोक्तसमाधिरनुसंधेयः । षड्भ्योलुक् षट् चतुर्भ्यश्चेतिवदर्थप्राधान्यबोधक बहुवचनस्यात्राभावाद्गौणेपि त्रया

